# मध्वतन्त्रमुखमर्दनम्

## व्याख्यया सहितम्

श्रीमदप्पयदीक्षितेन्द्रविरचितम् ।

म० म० पं० चिन्नस्वामिशास्त्रिकृतेन टिप्पणेन युतम् ।

सम्पादकः—

पं० रामनाथदीक्षितः

॥ श्रीः ॥

# मध्वतन्त्रमुखमर्दनम्

## श्रीमदप्पयदीक्षितेन्द्रैर्विरचितम्

तत्कृतया मध्वमतविध्वंसनाख्यया व्याख्यया सहितम्

---



काशीहिन्दूविश्वविद्यालयधर्मविज्ञानविद्यालयाध्यक्षैः

महामहोपाध्याय-पण्डितसार्वभौम-मीमांसाकेसरि-

**श्री पं० चिन्नस्वामिशास्त्रिमहोदयैः**

कृतेन सन्दर्भविवरणाख्येन टिप्पणेन योजितम्

---

श्रीदीक्षितेन्द्रवंशसम्भूतेन साहित्यशिरोमणिना

काशिकराजकीयसंस्कृतविद्यालये 'साधुलाल'

अनुसन्धानविभागमधितिष्ठता

**पं० श्रीरामनाथदीक्षितेन**

यथामति संशोधितम्

---


काशी रामघट्टस्थ हितचिन्तकमुद्रणालये

मुद्रापितं सत् विजयताम्

१०५१ ई०



श्रीकाञ्चीकामकोटिपीठाधिपतयो जगद्गुरवः

श्री १००८ मच्चन्द्रशेखरसरस्वतीमहास्वामिपादाः

॥ श्रीः ॥

श्रीमदाचार्यपादेभ्यो नमः ।

श्रीमदखिलभूमण्डलालङ्कारभूते त्रयस्त्रिंशत्कोटिदेवतासेविते श्री १००८ मच्छङ्करभगवत्पादपरमाधिष्ठानभूते श्रीकाञ्चीदिव्यक्षेत्रे श्रीकामकोटिपीठे श्रीशारदामठमधितिष्ठतां तपोविद्याधर्ममूर्तीनां अनवरताद्वैतानन्दैकरससमाप्लुतानां श्रीमद्भगवत्पादापरावताराणां श्रीमत्परमहंसपरिव्राजकाचार्यवर्याणां जगद्गुरूणां

श्री १००८ मच्चन्द्रशेखरेन्द्रसरस्वती-
संयमीन्द्रमहास्वामिपादानां

तपसे विद्यायै धर्माय च
भक्त्या समर्प्यते ।





नमः शिवाभ्याम् ॥

नमः श्रीगुरुचरणारविन्दाभ्याम् ॥

# सम्पादकीयम्

अयमिदानीं मध्वतन्त्रमुखमर्दनाख्यो ग्रन्थस्सव्याख्यः इदम्प्रथमतया देवाक्षरेषु मुद्राप्य प्रकाशं प्राप्यते। यद्यप्ययं पञ्चाशद्वत्सरेभ्यः पूर्वं दक्षिणदेशे ग्रन्थाक्षरैर्मुद्रित आसीत् परमिदानीं दुर्लभो जातः। क्वचित्परीक्षायां परीक्ष्यग्रन्थत्वेन निक्षिप्तः स्वालाभेनाऽध्येतॄन् क्लेशयन्नासीत्। किंचैकदेशीयाक्षरैर्मुद्रितत्वात्सर्वदेशीयविपश्चित्सुलभश्च नाऽऽसीत्। तमिममुभयविधं क्लेशं परिजिहीर्षमाणेन मया इदं देवनागराक्षरेषु पुनर्मुद्रणं समारब्धम्। ग्रन्थोऽयं अतिगभीरविचारचातुरीपरिपूर्णः श्रीमदानन्दतीर्थावलम्बितद्वैतमतखण्डनरूपस्तद्ग्रन्थस्थप्रमाणाभासयुक्त्याभासादिसमुद्घाटनरूपश्च।

अस्य ग्रन्थस्य एतद्व्याख्यानस्य च प्रणेतारः सर्वेष्वपि तन्त्रेष्वागमेषु पुराणेषु चाऽकुण्ठप्रसरद्भिस्स्मयनीयमतिवैभवाश्चतुरधिकशत (१०४) ग्रन्थनिर्माणचणाः श्रीशिवावतारत्वेन लोके (१) शिवरहस्यादिपुराणेषु च जोघुष्यमाणाः अस्मद्वंशमूल-

---

(१) शिवरहस्ये नवमांशे षोडशाध्याये पार्वतीं प्रति शिववचनम्—

शिवे मदंशसंभूतश्शङ्करश्शाङ्करोत्तमः।
चतुर्भिस्सह शिष्यैस्तु कलाववतरिष्यति।
दीक्षितोऽपि भवेत्कश्चिन्मदंशो भूसुरोऽम्बिके।
भासुराचारनिरतश्शैवश्छन्दोगवंशजः॥ (शैवः शिवे भक्तः। न तु शैवमतावलम्बी।)

अप्पयदीक्षितेन्द्राणां भ्रातृपौत्रैः श्रीनीलकण्ठदीक्षितैः स्वकृते गङ्गावतरणग्रन्थ एवमुक्तम्—

गङ्गया यः पुरा स्नातो देवश्चन्द्रार्धशेखरः।
गाङ्गेयेन पुनस्स्नातो सोऽवतीर्य यदात्मना॥

तथा शिवलीलार्णवे तैरेव—

कालेन शम्भुः किल तावताऽपि कलाश्चतुष्षष्टिमिताः प्रणिन्ये।
द्वासप्ततिं प्राप्य समाः प्रबन्धाञ्शतं व्यधादप्पयदीक्षितेन्द्रः॥

एवं नीलकण्ठविजये—

श्रीकण्ठोऽवततार यस्य वपुषा कल्पयात्मनेवाऽच्युत-
श्श्रीमानप्पयदीक्षितस्स जयति श्रीकण्ठविद्यागुरुः॥

तथा कुशकुमुद्वतीनाटके—"एष खलु द्वितीयशङ्करावताराणां अप्पयदीक्षितानां नप्ता नलचरितनाटकप्रबन्धा" ॥ इति ॥

गुरुषाः श्रीमन्तः अप्पयदीक्षितेन्द्रचरणाः । एते हि महाभागाः मद्रप्रान्ते मद्रपुरात्पश्चिमतः चत्वारिंशत्क्रोशपरिमितदेशवर्तिनि **मरकतवल्लीदेवीसमेतश्रीमार्गसहायेश्वराधिष्ठिते** श्रीविरिञ्चिपुराख्ये दिव्यक्षेत्रे १५७७ तमे वैक्रमेऽब्दे ( १५२० ख्रिस्ताब्दे ) **श्रीरङ्गराजाध्वरीन्द्रमङ्गलाम्बिकयोर्जन्म** लेभिरे । एतेषां पितृचरणाः श्रीरङ्गराजाध्वरीन्द्राः विरिञ्चिनगरादाग्नेयकोणे पञ्चदशक्रोशपरिमिते देशे स्थिते "**अडयप्पलं**" इति व्यवह्रियमाणे भूसुराग्रहारे न्यवात्सुः, यत्राऽस्माकमद्याऽपि वासः।

केचित्तु दीक्षितेन्द्राणां अडयप्पलग्राम एव जन्मेति वदन्ति । परम्परागतो निर्णयोऽयमेव यत् ते विरिञ्चिनगर एव जन्माऽलभन्त, ततः परं कियता कालेन च पितृभिस्सह अडयप्पलग्राममवापुरिति । एते ह्यतिबाल्य एव वयसि कृतोपनयनाः अधरितधिषणधिषणामहिमानः स्वपितृचरणेभ्यस्सर्वतन्त्रस्वतन्त्रेभ्यः **श्रीरङ्गराजाध्वरीन्द्रेभ्य** एव सर्वा अपि विद्या अधिजग्मुः । एतच्च तैरेव स्वकृतन्यायरक्षामणिशिवार्कमणिदीपिकयोरभिहितम् ।

"यं ब्रह्म निश्चितधियः प्रवदन्ति साक्षात्तद्दर्शनादखिलदर्शनपारभाजम् । तं सर्ववेदसमशेषबुधाधिराजं श्रीरङ्गराजमखिनं गुरुमानतोऽस्मि ॥ इति ( न्याय. र. श्लो. ४ ) कुलञ्चास्माकं शिवे भक्तिमत् अद्वैतमतावलम्बि च । अत एव कारणादिमेऽपि दीक्षितवर्यास्तथैवाऽऽसन्निति समुचितमेव । एतेषां पितृभिर्नामकरणकाले कृतं नाम विनायकसुब्रह्मण्य इति । बाल्ये स्नेहात् "अप्प, अप्पय, अप्पय्य" इति बन्धुभिराहूयन्ते स्म । तदेव च नाम लोके सुप्रसिद्धमभूत् । अतिबाल्य एव स्वपितृचरणेभ्य एवाऽधिगतनिखिलविद्या इमे स्वोचितां कुलीनां काञ्चन कन्यामुद्वाह्य ज्योतिष्टोमवाजपेयादीन्महाक्रतूनन्वतिष्ठन् । एतदीयं लोकविश्रुतं पाण्डित्यप्रकर्षं धर्मनिष्ठतां शिवे निरतिशयां भक्तिसंपत्तिं च श्रुत्वा तदानीं वेलूरपुरे राज्यधुरं निर्वहन् श्रीचिन्नबोम्माख्यः कश्चन सामन्तो नृपतिः एतान्दीक्षितवर्यान्स्वनिकटमानाय्य स्वसभायामेनान् सभापण्डितत्वेन नियोजयामास । शिवभक्ताग्रेसरस्स राजा एभिः कारयामास शिवार्कमणिदीपिका, शिवार्चनचन्द्रिका, प्रभृतीन्बहूञ्छैवमतग्रन्थान् । कारयामास चैतेषां पाण्डित्यप्रकर्षसमुल्लासितान्तरङ्गस्सौवर्णाभिषेकम् । इदं चाडयप्पलग्रामे श्रीकालकण्ठेश्वरमन्दिरे स्थापिते शिलाशासनेऽद्यापि दरीदृश्यते । एवं राजसभायामुषित्वा राज्ञा सबहुमानमाराधिताः लोके च शिवावतारत्वेन च संस्तुताः दीक्षितेन्द्राः चतुरधिकशत (१०४) प्रबन्धान्निर्माय आसेतुहिमाचलं तीर्थयात्रामटित्वाऽन्ते चिदम्बरक्षेत्रं गत्वा तत्रस्थं भगवन्तं नटनायकमाराधयन्तः कानिचिद्दिनानि न्यवात्सुः । तत्रैव च भौतिकीं तनुं संत्यज्य शिवेन सह सायुज्यमवापुः । निर्याणात्पूर्वकाले च श्लोको ऽयं पठितः--"चिदम्बरमिदं पुरं प्रथितमेव पुण्यस्थलं" इति ।

निर्याणसमये भगवतो नटनसभापतेः स्वरूपं ध्यायन्त एव श्लोकमिमं पठितु-

मारब्धाः—"आभाति हाटकसभानटपादपद्मज्योतिर्मयो मनसि मे तरुणारुणोऽयम्" इत्यर्धश्लोकपठनसमय एव तेषां ज्योतिर्भौतिकाच्छरीरान्निष्क्रम्य सर्वेषामेव पश्यतां पुरतो भगवति चिदम्बरनाथे विलिल्ये ।

एतेषां महानुभावानां चरितमिदं क्वचिद्ग्रन्थेषूपलब्धं, क्वचिदस्मत्परंपरायां वृद्धेभ्यःश्रुतमुपजीव्यैव लिखितं मया। महानुभावान् श्रीदीक्षितेन्द्रानारभ्य (१) एकादशोऽहं तत्परम्परायाम् । दीक्षितेन्द्रात्तृतीयपरम्परायां कनकसभापतिदीक्षिता आसन् । तस्य द्वादश पुत्रा अभूवन् । तदीयसन्ततिजाः केचन काञ्चीमण्डलान्तर्गत एवाऽस्मद्ग्रामे तत्परिसरवर्तिषु च केषुचिद्ग्रामेषु न्यवात्सुः, निवसन्ति चाऽद्यापि । इतरे चोलमण्डलं पाण्ड्यदेशं च गताः । तेषां सन्ततिस्तत्र प्रवृद्धा अद्यापि विराजते । दीक्षितेन्द्रकृता ग्रन्थाः (१) कुवलयानन्दः—अलङ्कारग्रन्थः । (२) चित्रमीमांसा अलङ्कारग्रन्थः । (३) वृत्तिवार्तिकं,—शक्त्यादिस्वरूपवर्णनम् (४) यादवाभ्युदयव्याख्यानम् । (५) नामसङ्ग्रहमाला-अभिधानकोशरूपा । (६) नामसङ्ग्रहमालाव्याख्या । (७) वरदराजस्तवः—विष्णुस्तुतिः । (८) वरदराजस्तवविवरणम्-वरदराजस्तवव्याख्यानम् । (९) कृष्णध्यानपद्धतिः—विष्णुस्तुतिः । (१०) दुर्गाचन्द्रकलास्तुतिः । (११) दुर्गाचन्द्रकलास्तुतिविवरणम् । (१२) आदित्यस्तोत्रम् । (१३) तद्व्याख्या । (१४) मयूखावलिः—शास्त्रदीपिकाव्याख्या । (१५) न्यायमुक्तावलिः-मध्वमतानुसारिणी ब्रह्मसूत्रवृत्तिः । (१६) नयमयूखमलिका-रामानुजमतानुसरिणी ब्रह्मसूत्रवृत्तिः । (१७) नयमणिमाला-श्रीकण्ठमतानुसारिणी ब्रह्मसूत्रवृत्तिः । (१८) नयमञ्जरी-अद्वैतमतानुसारिणीब्रह्मसूत्रवृत्तिः । (१९) सिद्धान्तलेशसङ्ग्रहः-अद्वैतान्तर्गतविविधसिद्धान्तवर्णनरूपः । (२०) न्यायरक्षामणिः-ब्रह्मसूत्रप्रथमाध्यायव्याख्या । (२१) कल्पतरुपरिमलः-कल्पतरुव्याख्यारूपः । (२२) शिवार्कमणिदीपिका-श्रीकण्ठभाष्यव्याख्यारूपा । (२३) आनन्दलहरी-श्रीकण्ठभाष्यतात्पर्यप्रकाशनरूपा । (२४) चन्द्रिका-तद्व्याख्या । (२५) अपीतकुचाम्बास्तवः-देवीस्तुतिः । (२६) रत्नत्रयपरीक्षा-हरिहरशक्तीनां महिमानिरूपणपरा । (२७) तद्व्याख्या ।

---

१. अप्पयदीक्षितेन्द्राः
२. नीलकण्ठदीक्षिताः
३. कनकसभापतिदीक्षिताः
४. कैलासदीक्षिताः
५. प्रभाकरदीक्षिताः
६. मार्गसहायदीक्षिताः
७. कुट्टिदीक्षिताः
८. स्वयम्भूदीक्षिताः
९. विनायकदीक्षिताः
१०. नागेश्वरदीक्षिताः

११. मार्गबन्धुदीक्षिताः    ११. रामनाथदीक्षितः ( विनायकदीक्षितः )

( २८ ) शिवाद्वैतनिर्णयः । ( २९ ) पञ्चरत्नस्तुतिः । ( ३० ) तद्व्याख्या । ( ३१ ) शिखरिणीमाला-शिवोत्कर्षप्रतिपादिका । ( ३२ ) शिवतत्त्वविवेकः-शिखरिणीमालाव्याख्या । ( ३३ ) ब्रह्मतर्कस्तवः-शिवपारम्यप्रतिपादकः । ( ३४ ) ब्रह्मतर्कस्तवविवरणम् । ( ३५ ) शिवकर्णामृतम् । ( ३६ ) शिवार्चनचन्द्रिका । ( ३७ ) बालचन्द्रिका । ( ३८ ) तद्व्याख्या । ( ३९ ) चित्रपटः—मीमांसाधिकरणश्लोकसङ्ग्रहः । ( ४० ) विधिरसायनम्-अपूर्वादिविधित्रयविचाररूपम् । ( ४१ ) विधिरसायनसुखोपयोजिनी-विधिरसायनव्याख्या । ( ४२ ) उपक्रमपराक्रमः–उपक्रमप्राबल्यनिरूपणरूपः । ( ४३ ) नक्षत्रवादावली–व्याकरणविषया । ( ४४ ) पूर्वोत्तरमीमांसावादनक्षत्रमाला । ( ४५ ) रामानुजशृङ्गभङ्गः । ( ४६ ) मध्वतन्त्रमुखमर्दनम् । ( ४७ ) मध्वमतविध्वंसनम्-तद्व्याख्या । ( ४८ ) अधिकरणपञ्जिका । ( ४९ ) वीरशैवम् । ( ५० ) तप्तमुद्राविद्रावणम् । ( ५१ ) गङ्गाधराष्टकम् । ( ५२ ) भस्मवादावली । ( ५३ ) पादुकासहस्रव्याख्या । ( ५४ ) रामानुजतात्पर्यसङ्ग्रहः । ( ५५ ) तद्व्याख्यानम् । ( ५६ ) भारततात्पर्यसङ्ग्रहः । ( ५७ ) तद्व्याख्या । ( ५८ ) रामायणतात्पर्यसङ्ग्रहः । ( ५९ ) तद्व्याख्या ( ६० ) शिवध्यानपद्धतिः । ( ६१ ) शब्दप्रकाशः–कोशरूपः । ( ६२ ) शिवपूजाविधिः । ( ६३ ) हरिहरस्तुतिः । ( ६४ ) प्राकृतचन्द्रिका । ( ६५ ) निग्रहाष्टकम्-स्वशत्रुनिग्रहार्थं कृतम् । ( ६६ ) आत्मार्पणस्तुतिः । ( ६७ ) मानसोल्लासः । ( ६८ ) श्रीविद्यातत्त्वविवरणम् । ( ६९ ) मार्गबन्धुचम्पूः-स्वकुलदैवतस्तुतिरूपा । ( ७० ) मार्गबन्धुपञ्चरत्नम् । ( ७१ ) तान्त्रिकमीमांसा । ( ७२ ) अनुग्रहाष्टकम् । ( ७३ ) शिवमहिमकलिकास्तुतिः । ( ७४ ) अधिकरणमाला । ( ७५ ) अधिकरणसारावलिः । ( ७६ ) अमरकोशव्याख्या । ( ७७ ) अरुणाचलेश्वरस्तुतिः । ( ७८ ) कृष्णध्यानपद्धतिव्याख्या । ( ७९ ) जयोल्लासनिधिः । ( ८० ) तत्त्वमुक्तावली । ( ८१ ) तिङन्तशेषसङ्ग्रहः । ( ८२ ) धर्ममीमांसापरिभाषा । (८३) न्यायरत्नमाला । ( ८४ ) तद्व्याख्या । ( ८५ ) पञ्चस्वरवृत्तिः । ( ८६ ) प्रबोधचन्द्रोदयटीका । ( ८७ ) मतसारार्थसङ्ग्रहः । ( ८८ ) मार्गसहायस्तोत्रम् । ( ८९ ) वसुमतीचित्रसेनविलासनाटकम् । ( ९० ) विष्णुतत्त्वरहस्यम् । ( ९१ ) शान्तिस्तवः । ( ९२ ) शिवध्यानपद्धतिव्याख्यानम् । ( ९३ ) शिवपुराणतामसत्वखण्डनम् । (९४) शैवकल्पद्रुमः । (९५) सिद्धान्तरत्नाकरः । (९६) स्तोत्ररत्नाकरः । ( ९७ ) हंससन्देशटीका (९९) मार्गसहायलिङ्गस्तुतिः । ( ९९ ) लक्षणरत्नावलीव्याख्या । ( १०० ) हरिवंशसारचरितव्याख्या । ( १०१ ) दशकुमारचरितसङ्ग्रहः । ( १०२ ) भक्तिशतकम् । ( १०३ ) न्यायमुक्तावलीव्याख्या । ( १०४ ) मणिमालिका ।

दीक्षितेन्द्राणां सत्यपि शिवभक्तत्वेऽद्वैतमतावलम्बित्वे च मतान्तरविद्वेषः देवतान्तरे न्यूनतादृष्टिर्वा न मनागप्यासीत् । किञ्चैषां विष्णौ निरतिशयभक्तिमत्त्वं

तृतीयश्लोकटिप्पण्यां टिप्पणीकारैस्सप्रमाणं निरूपितम्, तदप्यवलोकनीयम् । परं तस्मिन्समये दक्षिणदेशे प्रसरमुपेयुषोः श्रीमद्रामानुजीयश्रीमदानन्दतीर्थीयमतयोः स्थिताः पण्डिताः अद्वैतमतं बहुधा बह्वदूदुषन्, शिवं च परमेशानं नितरां निकर्षं प्रापयन् । तदुभयमप्यसहमानैः तत्समाधावयतने ईश्वरापराधं मन्वानैश्च दीक्षितेन्द्रैः तत्प्रतिवचने यतितम् । तदुक्तं तैरेव—

विष्णुर्वा शङ्करो वा श्रुतिशिखरगिरामस्तु तात्पर्यभूमि-
नास्माकं तत्र वादः प्रसरति किमपि स्पष्टमद्वैतभाजाम् ।
किन्त्वीशद्वेषगाढानलकलितहृदां दुर्मतीनां दुरुक्ती-
र्भङ्क्तुं यत्नो मयायं न हि भवति ततो विष्णुविद्वेषशङ्का ॥

तथा तत्कृते हरिहरशतके—

वस्तां पिशङ्गं वसनं दिशो वा गरुत्मता यातु ककुद्मता वा ।
निद्रातु वा नृत्यतु वाऽधिरङ्गं भेदो न मे स्यात्परमस्य धाम्नः ॥ इति ।

एवं एतद्ग्रन्थारम्भे—

शिवं विष्णुं वा यद्यभिदधति शास्त्रस्य विषयं
तदिष्टं ग्राह्यं नस्सगुणमपि तद्ब्रह्म भजताम् ।
विरोधो नातीव स्फुरति नहिनिन्दानयविदां
न सूत्राणामर्थान्तरमपि भवद्धार्यमुचितम् ॥

किञ्चात्र ग्रन्थे प्रवृत्तिं प्रति कारणं न क्वचित् द्वेषस्स्नेहो वा । परन्तु परग्रन्थे वैदिकमर्यादायास्सर्वशिष्टशास्त्रकारसम्मतायास्सर्वतस्समुल्लङ्घनमेव । उक्तं हि तैरेवात्र द्वितीयश्लोके—

तथाऽप्यानन्दतीर्थीयं मतमग्राह्यमेव नः ।
यत्र वैदिकमर्यादा भूयस्याकुलतां गता ॥ इति ।

अत्र ग्रन्थकारैः "अथाऽतो ब्रह्मजिज्ञासे" त्यारभ्य "ईक्षतेर्नाशब्दं" इत्यन्तैः पञ्चभिस्सूत्रैःप्रतिपादितां पञ्चाधिकरणीमवलम्ब्य तदुक्ताभिरेव युक्तिभिः अदृष्टाश्रुतपूर्व-स्वमनोमात्रविलसच्छ्रुतिस्मृतिपुराणवचोनिचयप्रापितविषयैरेव परस्परविरुद्धैः तदीय-ग्रन्थदूषणं कृतम् । प्रसिद्धमीमांसकमर्यादाश्च भूयस्य आकुलीकृतास्सपष्टमुद्घाटिताः । एतत्पञ्चाधिकरणीदूषणव्याजेन प्रायस्सर्वमपि तदीयं ब्रह्मसूत्रोपनिषद्भाष्यानुव्याख्यान-तत्वप्रकाशादिकं ग्रन्थजातं सम्यगालोडितम् । यद्यपीतोऽप्यत्रशिष्टा विशेषतो विवेच-नीया विषया वर्तन्ते बहवस्तथापि दिङ्मात्रप्रदर्शनेनाऽप्यग्रे विद्वांसो विवेचयिष्य-न्तीत्येतावतैव विरतं दीक्षितेन्द्रैः । मन्ये विपश्चिन्मणयस्तन्मनोरथं पूरयन्ति पूरयिष्यन्ति चेति ।

एतद्ग्रन्थमुद्रणे साहाय्यार्थं सङ्गृहीतानि पञ्च हस्तलिखितपुस्तकानि । तत्र (१) महामहोपाध्यायानां पं० चिन्नस्वामिशास्त्रिमहोदयानां निकटस्थं 'क' संज्ञितम् । (२) मद्रपुर्यडयारपुस्तकालयस्थं 'ख' संज्ञितम् । (३-४) काशीस्थसरस्वतीभवन-पुस्तकालयस्थम् । 'ग-घ' संज्ञितपुस्तकद्वयं । (५) श्रीकाशीहनुमद्घट्टस्थभजनमठीयं 'ख' संज्ञितमपूर्णम् ॥ एतत्पुस्तकपञ्चकमवलम्ब्य समारब्धसंशोधनकार्येण मया इतः पूर्वमपरिचितैतद्व्यापारेण मन्ये संशोधनकार्येऽधिकतरमेव स्खालित्यं कृतं भवेदिति । तद्विद्वांसोऽनुग्रहैकपरा गुणग्रवणैकमनसः क्षम्यन्तु मामनुगृह्णन्त्विति च सविनयमभ्यर्थये तान् ।

प्रथमं एतत्कार्यकरणाय सदयं मामनुज्ञातवद्भ्योऽस्मदध्यक्षमहोदयेभ्यः डा. **श्रीमङ्गलदेवशास्त्रिमहोदयेभ्यः** परश्शताः कृतज्ञाता आविष्करोमि ।

येऽत्र मय्यनुकम्पापरा स्वीयानि पुस्तकानि यावन्मुद्रणसमाप्ति मन्निकट एवाऽवास्थापयन्, तान् म. म. पं. अ. **चिन्नस्वामिशास्त्रिमहोदयान्**, काशिक-राजकीयसंस्कृतपुस्तकालयाध्यक्षान् **डाक्टर श्रीमङ्गलदेवशास्त्रिमहोदयान्**, तत्पुस्तकालयोपाध्यक्षान् **पं. श्रीनारायणशास्त्रिखिस्तेमहोदयान्**, अडया-रपुस्तकालायडैरक्टर्पदमधितिष्ठतः केप्टन् **श्रीश्रीनिवासमूर्त्तिमहोदयान्**, भजनमठाध्यक्ष **श्रीकाशीनाथशास्त्रिमहोदयान्**, ये चेतोऽतिरिक्तान् मध्व-भाष्यानुव्याख्यानतत्वप्रकाशकादिग्रन्थान् दत्वा मामन्वकम्पत तान् विश्वनाथ-पुस्तकालयाध्यक्षान् **पं. श्रीकृष्णपन्तमहोदयांश्च** सर्वथा विस्मर्तुमनीशानः तान्य-थावद्धन्यवादैः आपूरयामि कृतज्ञताप्रदर्शनपूर्वकम् ॥

अपरिचितपूर्वेऽस्मिन्संशोधनकार्ये तदा तदा समुचितं पन्थानमादिश्य मामनुगृहीतवद्भ्यः काशीहिन्दूविश्वविद्यालयमीमांसाप्रधानाध्यापकेभ्यः **पं. श्रीपट्टाभि-रामशास्त्रिमहोदयेभ्यः** बहून्नमोवाकान् प्रशासे ॥

निर्दिष्टसमये मुद्रणकार्यं समाप्य मदुत्साहमुत्तेजितवतां हितचिन्तकमुद्रणा-लयाध्यक्षाणां पं० श्री कृ० ब० पावगी महोदयानां कार्यभारं बहुधा प्रशंसन्नितोऽपि समुचितां समुन्नतिं श्रीकाशीपुराधीशाद्विश्वेश्वरादाशंसे । अनेन च मदीयेन व्यापारेण सन्तुष्टान्तरङ्गाः मत्कुलोत्तंसाः श्रीशिवावतारभूताः श्रीदीक्षितेन्द्रचरणा एतद्ग्रन्थकर्तारः, येभ्यो मया वेदविद्याव्याकरणसाहित्यादिकं आबाल्यात् यथानियममधीतम्, ते मे भ्रातृचरणाः **मार्गबन्धुदीक्षितपादाः**, पैतृष्वसेयाः **श्रीनटराज-शास्त्रिचरणाश्च** गुरुवर्या मां सर्वथाऽनुगृह्णीयुरिति च विश्वसिमि ॥

इति

विदुषां वशंवदः

**अ. मु. रामनाथदीक्षितः**

साहित्यशिरोमणिः ।

१७ हनुमद्घट्टः वाराणसी ।
भाद्रपदकृष्णैकादशी
वै. सं. १९९८

॥ श्रीः ॥

शिवाभ्यां नमः ॥

सर्वतन्त्रस्वतन्त्रचतुरधिकशतग्रन्थनिर्मातृ-

श्रीमदप्पयदीक्षितेन्द्रविरचितम्

# मध्वतन्त्रमुखमर्दनम् ।

तत्कृतया मध्वमतविध्वंसनाख्यया

व्याख्यया सहितम् ।



उद्घाट्य योगकलया हृदयाब्जकोशं
धन्यैश्चिरादपि यथारुचि गृह्यमाणः ।
यः प्रस्फुरत्यविरतं परिपूर्णरूपः
श्रेयस्स मे दिशतु शाश्वतिकं मुकुन्दः ॥ १ ॥

मध्वतन्त्रमुखमर्दनं मया यत्कृतं प्रकरणं मिताक्षरम् ।
पद्यरूपमनतिस्फुटाशयं तत्सुखावगतये विविच्यते ॥ २ ॥

आनन्दतीर्थप्रवर्तितशारीरकशास्त्रप्राथमिकपञ्चाधिकरणप्रक्रियां प्रायस्तन्मतमर्यादयैव दूषयितुं प्रकरणमारभमाणः प्रारीप्सितप्रकरणस्य(१) निर्विघ्नपरिसमाप्त्यादिप्रयोजनायाऽऽदौ विशिष्टेष्टदेवतानुसन्धानकीर्तनरूपं मङ्गलमाचरन्नेव प्रकरणारम्भं तावदाक्षिपति—

शिवं विष्णुं वा यद्यभिदधति शास्त्रस्य विषयं
तदिष्टं ग्राह्यं नस्सगुणमपि तद्ब्रह्म भजताम् ।
विरोधो नातीव स्फुरति नहिनिन्दानयविदां
न सूत्राणामर्थान्तरमपि भवद्वार्यमुचितम् ॥ १ ॥

वस्तुतो निर्विशेषब्रह्मणि प्रतिष्ठितस्यापि शारीरकमीमांसाशास्त्रस्य केचन शिवं

---

१ प्रकरणाविघ्नपरिसमाप्ति इति ख० पु० पाठः ।

विष्णुं वा विषयं वदन्ति चेत्तदिष्टमेव; यतस्तच्छिवरूपं विष्णुरूपं वा सगुणं ब्रह्मोपासीनानामस्माकमद्वैतवादिनां उपास्य(१)स्वरूपगुणमहिमावधारणाय तत्प्रतिपादनप्रवृत्तं तदीयं शास्त्रस्य योजनं ग्राह्यम् । अपेक्षितं खल्वस्माकमपि निदिध्यासनोपयोगिचित्तवशीकरणकैलासवैकुण्ठादिस्थानगतदिव्यभोगानुभवक्रममुक्तिरूप(२)फलापेक्षिणां तयोरुपासनम् । अथाऽपि स्यात्क्वचित्कचिद्विरुद्धत्वात्तदीयं योजनमग्राह्यमिति । (३)नैतावदेवोपेक्षणीयताहेतुः, विरोधाभावात् । तथाहि—निर्गुणवाक्यानां सगुणे ब्रह्मणि सगुणान्तरपरवाक्यानां स्वस्वाभिमतसगुणब्रह्मणि योजनम्, ब्रह्मणस्सगुणत्वसप्रपञ्चत्वादिसाधनम्, स्वस्वाभिमतसगुणब्रह्मणस्सगुणान्तरादधिकत्वसाधनम् सगुणान्तरस्य परब्रह्मत्वाभावसाधनम्, तत्र सर्वत्राऽपि युक्त्युपन्यसनम्, तद्विरोधियुक्तिनिरसनमित्यादिकं हि विरुद्धमेव भासते । तत्सर्वं "न हि निन्दा" न्यायेनाविरुद्धम् । न हि निन्दान्यायश्च "स्फारात्तत्तत्पुराणागमे"ति श्लोकव्याख्यानावसरे स्फुटीकरिष्यते । अपिचाऽस्मदीयपूर्वाचार्यग्रन्थेष्वपि महता यत्नेन परस्परपक्षप्रतिक्षेपपूर्वकमेकजीववदनेकजीववादादिव्यवस्थापनं दृश्यते । न च (४)तत्सर्वं तार्किकादिग्रन्थेषु परस्परपक्षप्रतिक्षेपादिवद्विरुद्धमेव । किन्त्वद्वितीयब्रह्मप्रतिपत्त्युपायेषु नानाविधेषु संभवत्सु विनेयबुद्धिप्रावण्यानुसारेणोपदिदिक्षितोपायविशेषाणां तत्तद्विनेयबुद्धिस्थिरीकरणार्थत्वात्सूक्ष्मारुन्धतीप्रतिपत्त्युपायतदुपदेश्यपुरुषचक्षुर्विक्षेपाभिमुखतारकविषयनानाविधस्थूलारुन्धतीप्रदर्शकवाक्यवत्सिद्धशब्दप्रतिपत्त्युपायकृत्रिमशब्दगतत्रिविधप्रकृतिप्रत्ययादित्रिमार्गप्रदर्शकानेकव्याकरणवच्चाऽविरुद्धम् । किं बहुना, श्रुतिष्वपि क्वचिदाकाशादिसृष्टिप्रतिपादनं, क्वचित्तेजःप्रभृतिसृष्टिप्रतिपादनमित्याद्यध्यारोपापवादाभ्यामद्वितीयब्रह्मप्रतिपत्त्युपायभेदत्वादविरुद्धम् । (५)"कारणत्वेन चाकाशा"दित्यधिकरणे तथा निरूपितत्वात् ।

तथा शारीरकसूत्राणां तत्र तत्र सगुणे योजनान्तरमपि (६)तत्सगुणोपासनाभिमुखानां तत्र तत्र बुद्धिस्थिरीकरणार्थमित्यविरोधनये न काप्यनुपपत्तिः ।

यत्त्वमस्मदनभिमतोपासनाप्रकारकथनादि तावन्मात्रमनुपादेयमस्तु । न तावता सगुणपरत्वेन सूत्रयोजनानां सर्वथैवोपेक्षणीयता ।

अथोच्येत–निर्गुणपरस्सूत्रसन्दर्भः कथं सगुणपरोऽपि स्यादिति । स्यादेव, सूत्राणां विश्वतोमुखत्वादिति ब्रूमः । न ह्यस्मदीयैरपि निर्गुणपराणामेव सूत्राणां सगुणेऽपि सम्भवदपेक्षितं योजनान्तरं वार्यते । भाष्य एव (७)"शास्त्रयोनित्वादि"ति

---

१ स्वरूपेति ख० पु० नास्ति । २ फलापेक्षाणां ख० पु० पाठः । ३ नैतदेवं ग० पु० । ४ सर्वं ग० पु० । ५ वे. सू., १. ४. १४. । ६ तत्तत् ग० पु० । ७ वे. सू., १. १. ३. ।

सूत्रस्य निर्गुणौपनिषदत्वव्यवस्थापनार्थत्वेन सगुणसार्वज्ञादिसमर्थनार्थत्वेन च योजितत्वात् । **कल्पतरौ** (१)च "अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शना"दिति सूत्रस्याग्निहोत्रादिकं (२)"तस्मै तदधिगम उत्तरपूर्वाघयोरि" ति सूत्रे तदधिगमशब्देन प्रस्तुताय निर्विशेषब्रह्मापरोक्षज्ञानरूपाय कार्यायैव "विविदिषन्ति यज्ञेने" त्यादि श्रुतिदर्शनात् समस्तकर्मवृन्ददाहकत्वेन कर्मजातिविरोधिनोऽपि तस्य ज्ञानस्य नित्ययज्ञादिकर्मविशेषकार्यत्वं नायुक्तम्, समस्तवनदाहकस्याऽपि दावदहनस्य वनान्तर्गतवेण्वादिकार्यत्वदर्शनादिति निर्गुणविषययोजनस्याऽग्निहोत्रादिकं सगुणब्रह्माधिगमस्य कार्यायैव; सगुणविदां केकयादीनां यज्ञाद्यनुष्ठानदर्शनात् निर्गुणविद्याफलस्येव सगुणविद्याफलस्य कर्मकार्यत्वं नाऽयुक्तम् । सगुणविद्याफलस्य सातिशयत्वदर्शनादिति सगुणविषययोजनस्य च दर्शितत्वात् । एवं च भगवतो नारायणस्य स्वरूपं तस्याऽचिन्त्याद्भुतगुणमहिमविभूतिवैभवं तदुपासनादिप्रकारं तत्फलभोगक्रमं च श्रुतिस्मृतिन्यायैर्निरूपयितुं प्रवृत्तमानन्दतीर्थीयं मतमपि कुतो न ग्राह्यम् ? येन तद्दूषणे प्रवृत्तिरित्याक्षेपाभिप्रायः ॥ १ ॥

इममाक्षेपं समादधानः प्रयोजनप्रदर्शनपूर्वकं प्रकरणारम्भं प्रतिजानाते—

**तथाऽप्यानन्दतीर्थीयं मतमग्राह्यमेव नः ।**
**यत्र वैदिकमर्यादा भूयस्याकुलतां गता ॥ २ ॥**
**अतः पञ्चाधिकरणीं लक्ष्यीकृत्यैव तन्मते ।**
**दूष्यस्थलानि सर्वत्र सूच्यन्ते सुधियां मुदे ॥ ३ ॥**

यद्यप्येवमुक्तया रीत्याऽन्यदीयानि सगुणयोजनान्युपादेयानि तथाप्यानन्दतीर्थीयं योजनमनुपादेयमेव । अन्यदीयेषु हि योजनेषु सगुणनिर्गुणभेदाभेदादिविषयतया कतिपयेष्वेव सूत्रेषु प्रकारभेदः । अन्येषु हि सूत्रेषु क्वचित्क्वचित्पूर्वसिद्धान्तरचनाभङ्गीभेदेऽपि फलतो न विवादः । आनन्दतीर्थीये तु योजने प्रायस्सर्वत्रैव प्रकारभेदः । (३)सोऽप्यन्येषामसम्प्रतिपन्नेषु स्वमात्रकल्पितेष्वर्थेषु । तत्र (४)चतुर, कमठ, माठर, कौंठरव्य, कौण्डिन्य,

१ वे. सू., ४. १. १६. । २ वे० सू० ४. १. १३. । ३ सोऽप्यन्येषामसंप्रतिपन्नः । तेषु इति मध्वमुखालङ्कारेऽनुदितः पाठः ।

४ मध्वभाष्ये उदाहृतानां चतुरादिश्रुतीनां स्थलनिर्देशः क्रियते । तत्र यद्यपि श्रुतीनामासां तन्त्रादीनां च मध्वभाष्ये बहुधा बहुत्र विभिन्नवाक्योदाहरणार्थं नामानि गृहीतानि, तथापि स्थालीपुलाकन्यायेनैकैकस्याश्श्रुतेः पुराणादेश्च एकैकस्थलप्रदर्शनमपि कार्यं साधयेदिति तदेवाऽधः प्रदर्श्यते—

माण्डव्य, मार्कण्डेय, मौद्गल्य, पौष्यायण, पौत्रायण, सौत्रायण, पाराशर्यायण, माध्यन्दिनायन, कौषारव, काषायण, बृहदुद्दालकौद्दालकायन, कौशिक, सौपर्ण, शाण्डिल्य, वत्स, गौपवन, भाल्लवेयाग्निवेश्य, चतुर्वेदसंहिता, चतुर्वेदशिखेन्द्रद्युम्न, परमश्रुत्यादिवचनानीति तदनुसारिण्यध्यात्मनारायणाध्यात्मसंहिता, बृहत्संहिता, महासंहिता, नारायणतन्त्र, बृहत्तन्त्र, पुरुषोत्तमतन्त्र, मायावैभव, ब्रह्मतर्क, भविष्यत्पर्वादिवचनानीति चाऽत्यन्ताप्रसिद्धानामेव वचनानां साक्षितयोपन्यासः, तदुपन्यासप्रसक्तस्वानाप्तत्वशङ्कापरिहाराय हनुमद्भीमसेनक्रमेण वायोः स्वयं तृतीयावतार इत्युद्घोषः; तत्र च साक्षितया—

| | अ. पा. सू. | | अ. पा. सू. |
|---|---|---|---|
| (१) चतुरश्रुतिः | ३. ३. ३४. | (१९) वत्स | ३. ३. ४०. |
| (२) कमठश्रुतिः | ३. ३. ५२. | (२०) गौपवन | २. ३. ३१. |
| (३) माठरश्रुतिः | ३. ४. ४. | (२१) भाल्लवेय | १. १. १. |
| (४) कौण्ठरव्य | ३. १. १४. | (२२) आग्निवेश्य | २. ३. ३०. |
| (५) कौण्डिन्य | २. ४. ५. | (२३) सौत्रायण | २. ४. १४. |
| (६) माण्डव्य | २. ४. १२. | (२४) चतुर्वेदशिखा | १. १. १५. |
| (७) उद्दालक | ४. ४. ६. | (२५) इन्द्रद्युम्न | १. २. ५. |
| (८) मौद्गल्य | ४. ४. १. | (२६) परमश्रुतिः | ३. ३. १५. |
| (९) पौष्यायण | २. ३. २०. | (२७) नारायणाध्यात्मम् | ३. २. २७. |
| (१०) पौत्रायण | २. ४. १८. | (२८) अध्यात्मसंहिता | ४. ३. २२. |
| (११) पाराशर्यायण | २. ३. ४३. | (२९) बृहत्संहिता | १. १. १. |
| (१२) माध्यन्दिनायन | ४. २. १३. | (३०) महासंहिता | ३. ३. ४६. |
| (१३) कौषारव | ३. १. २६. | (३१) नारायणतन्त्रम् | ३. ३. ५१. |
| (१४) काषायण | २. ३. १८. | (३२) बृहत्तन्त्र | ३. ३. ६. |
| (१५) बृहच्छ्रुतिः | ४. २. ५. | (३३) पुरुषोत्तमतन्त्रम् | २. १ १८. |
| (१६) कौशिक | ३. ३. ४९. | (३४) मायावैभवः | ३. ३. ५४. |
| (१७) सौपर्ण | ४. १. १३. | (३५) ब्रह्मतर्कः | ३. २. १३. |
| (१८) शाण्डिल्य | ३. ३. २७. | (३६) भविष्यत्पर्व | २. ३. २९. |

## आदिशब्दग्राह्याणि च

| | | | |
|---|---|---|---|
| (१) भागवततन्त्रम् | १. १. १. | (५) महोपनिषत् | २. ३. १३. |
| (२) व्योमसंहिता | १. १. १. | (६) नारायणसंहिता | २. १. ३४. |
| (३) महाकौर्मः | १. २. ३. | (७) वायुप्रोक्तं | ३. ३. २८. |
| (४) वाराहसंहिता | १. १. ११. | (८) समाख्या श्रुतिः | १. १. २. |

(१)"प्रथमो हनुमान्नाम द्वितीयो भीमसेनकः ।
पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः" ॥

इति स्मृतिवचनमस्तीति स्वयमेव तदुदाहरणम् । "(२)बळित्था तद्वपुषे धायि दर्शतं"(३) इत्याद्यृग्वेदमन्त्रस्य स्वकल्पितवाय्ववतारत्रयपरतया प्रदर्शकमित्यादि प्रामाणिकमर्यादालङ्घनं भूयसा दृश्यते । तथाऽपि "युक्तियुक्तं वचो ग्राह्यं न तु पुरुषगौरवमि"ति न्यायेन तन्मतं श्रद्दधीमहि यदि तत्रोपपन्नं किंचिदाकलयेम । न त्वेवम्, प्रायेण हि

१ तस्माद्विष्णोर्हि महिमा भारतोक्तो यथार्थतः ।
तस्याङ्गं प्रथमं वायुः प्रादुर्भावलयान्वितः ॥
प्रथमो हनूमान्नाम द्वितीयो भीम एव च ।
पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः ॥
त्रेताद्येषु युगेष्वेव संभूतः केशवाज्ञया ।

इति तत्कृते भारततात्पर्यनिर्णयाख्ये तदीयाः श्लोकाः ॥

२ बळित्था तद्वपुषे धायि दर्शतं देवस्य भर्गस्सहसो यतोऽजनि । यदीमुपह्वरते साधने मतिः ऋतस्य धेना अनयन्त सस्रुतः ॥ ( ऋ. सं., २. २. ८. १. )

३ ऋगियं एतदुपरितनं ऋग्द्वयं च वाय्वादीनां अवतारबोधकतयोपात्तं भारततात्पर्यनिर्णये । तस्य व्याख्यारूपं पद्यमपि तत्रैव तेन सन्दृब्धं ब्रह्मसूत्रभाष्यान्ते च । तद्यथा—

"यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं तद्बट्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् । वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हरौ तेन हि" । अस्यार्थो विवृतः तत्वप्रकाशिकायाम् । सोऽपि यथा—"यस्य वायोर्देवस्य बळित्थेत्यादिवेदवचने क्रीडादिगुणयुक्तानि त्रीणि रूपाण्युदितानि तस्य यत्तृतीयं रूपं तेनेदं भाष्यं हरिविषयतया कृतमित्यन्वयः । कीदृशं चास्य मूलरूपम् ? कानि चित्राणि ? कीदृशानीति । तत्राह—अलमिति । यदस्य वायोर्मूलरूपं बट् बलात्मकं दर्शनं ज्ञानरूपं भर्गो जगद्भरणगमनगुणं महन्महनीयं तदित्थंभूतमेव रूपत्रयावताराय भगवता निहितं प्रेरितमवतीर्णं च । तत्र प्रथमं हनुमदाख्यं वपुः रामस्य वचांसि सीतां प्रति नीतवत् रामविषयवचांसि मूलरामायणरूपाणि शिष्येषु नीतवत् रामवचसि यो नयः न्यायः आज्ञारूपस्तद्युक्तं वा । द्वितीयं वपुर्भीमनामकं कुरुपृतनाक्षयकरं, तृतीयं वपुरानन्दरूपस्य हरेः प्रतिपादकशास्त्रनिर्मातृमध्वाभिधमिति । अतः परमाप्ततमप्रणीतत्वादिदं भाष्यं सकलसुजनैरादरेणाऽङ्गीकार्यमिति भावः ।

तन्मते स्वमात्रहृदयारूढानि वचनान्येवोपजीव्यानि(१), न तु न्यायाः । ये तु न्यायाः प्रदर्शितास्तेऽप्यत्यन्तशिथिला एव क्वचित्क्वचिदाश्रिताः । पूर्वमीमांसामर्यादाप्यसामञ्जस्येनैव नीता । प्रायेणाऽसाधुभिरेव च शब्दैर्व्यवहारः । श्लोकरचनायां त्वन्वयासंभवो वृत्तान्यथाभावश्चाऽधिकः । सर्वमेतत्तदीयभाष्यानुव्याख्यानभारततात्पर्यसङ्ग्रहादिदर्शिनां स्पष्टमेव । अत्रापि तत्र तत्र तदीयवचनोदाहरणैः कियदपि स्पष्टीभविष्यति । तस्मादेवंभूतं मतमनुपादेयमेवेति(२) तन्मतसिद्धामीक्षत्यधिकरणान्तां पञ्चाधिकरणीं दूष्यतया लक्ष्यीकृत्य तन्मते सर्वत्रापि दूषणीयप्रदेशास्तन्मतदूषणकौतुकिनां विदुषां मुदे सूच्यन्ते । तथा च यद्यपि मदुक्तानि दूषणानि सम्यञ्चि न भवेयुस्तथाऽप्यस्मिन् प्रकरणे सङ्गृह्य प्रदर्शितांस्तन्मतदूष्यप्रदेशान् पश्यन्तो विपश्चितः सम्यग्दूषयिष्यन्तीति तदर्थं प्रकरणमिदमारभ्यत इत्यर्थः ॥ ३ ॥

१ उपजीवितानि इति मध्वमुखालङ्कारोद्धृतः पाठः ।

२ यत्तु मध्वमतविध्वंसनखण्डनार्थं प्रवृत्तैः श्रीमद्वनमालिमिश्रैः स्वकीये मध्वमुखालङ्कारे एतत्सन्दर्भखण्डनावसरे "चूतस्य नापराधोऽस्ति ह्युष्ट्रो दूराद्यदुज्झति । सौभाग्यं नैव निम्बस्य यदादत्तेऽनुरागतः ॥ इदमेवोत्तरं तस्य मन्दबुद्धेस्सुरद्विषः । विष्णुद्वेषाद् ब्रुवाणस्य ह्युत्तरं नास्ति चाऽपरम् ॥ (म० मुखालं ४.) इत्यादिना दीक्षितानां निन्दा कृता, सा तेषां यथावद्ग्रन्थदूषणेऽसामर्थ्यं अविषयं वा प्रकटयति । न हि केवलं दीक्षितेन्द्राः विष्णावद्वेषिणः, परन्तु तत्र परमभक्ताः, विष्णोः परब्रह्मत्ववादिनश्च इत्यादिकं—

"आपादमाचिकुरभारमशेषमङ्गमानन्दबृन्दलसितं सुदृशामसीमम् । अन्तर्मम स्फुरतु सन्ततमन्तरात्मन्नम्भोजलोचन तव श्रितहस्तिशैलम् ॥" ( वरदराजस्तवे १०६ तमः श्लोकः ) ।

"आस्माकीना तु सैद्धान्तिकसरणिरियं यत्परब्रह्मकोटिः श्रीमान्नारायणस्सन्महित इति महाभारतादिप्रसिद्धेः ।" ( आनं. श्लो. ३५ ) ।

"वेदविभागार्थमेवावतीर्णेन सकलवेदतात्पर्याभिज्ञेन सर्वज्ञशिखामणिना भगवता वेदव्यासेन पुलस्त्यवरदानलब्धदेवतापारमार्थ्यवेदनेन श्रीपराशरेणाऽन्यैश्च महर्षिभिर्वेदोपबृंहणार्थं प्रणीतेषु श्रीमहाभारतविष्णुपुराणादिषु निश्चितपरब्रह्मभावस्य सद्भिस्सर्वैरप्यविभागेन परब्रह्मेत्येव पूजितस्य श्रीनारायणस्य क्वचित्कोणे निविष्टमन्त्रार्थवादपुराणवचनादिलेशमवलम्ब्य जीवभावं वक्तुं नास्मज्जिह्वा प्रवर्तते । तथा चेन्मूर्धा च शतधा भवति । वेदवैदिकद्रोहो देवताद्रोहश्च जायते । अतो नारायणः परब्रह्मकोटिरित्येवास्माकं सिद्धान्तः" । ( आनन्दलहरी पृष्ठं ६४-६५ वाणीविलाससंस्करणम् । ) इत्यादीनि वरदराजस्तवानन्दलहर्यादिगतानि तदीयानि परश्शतवचनानि पुनः पुनरनुसन्दधतः के वा न जानन्ति ? ।

तत्र प्रथमाधिकरणपूर्वपक्षमनूद्य दूषयति—

**आत्मा ब्रह्मेत्यधीतश्श्रुतिशिखरगणैर्निर्विशेषश्च सर्वैः**
**किं तत्र स्वप्रकाशे गुणलवरहिते वस्तु शास्त्रेण चिन्त्यम् ।**
**इत्याक्षेपो गुरूणां नतिततिविषये स्वप्रणम्यत्ववादः**
**श्रुत्यन्तानां निरूप्यस्स यदि जडमते केन शास्त्रस्य न स्यात् ॥४॥**

अत्रेदं परकीयमधिकरणम्—ब्रह्ममीमांसाशास्त्रमिदं नाऽऽरम्भणीयं निर्विषयत्वात् । न तावदस्य सविशेषं ब्रह्म विषयः, तत्र मानाभावात् । वेदान्तानां निर्विशेषजीवस्वरूपमात्रपरत्वात् । न च जीव एव ब्रह्मेति स एव विषयः । तस्य स्वप्रकाशत्वेनाहमिति सर्वानुभवसिद्धत्वात् । निर्विशेषे च तत्र निरूपणीयानां धर्माणामभावादिति पूर्वः पक्षः। सिद्धान्तस्तु भवेदेवं निर्विषयत्वं यदि विचार्यत्वाभिमतं ब्रह्म जीवरूपत्वेन संशयविपर्ययानास्पदं स्यात् । न त्वेवम्, तस्य "तद्विजिज्ञासस्व । तद्ब्रह्मेति" इति विचारविषये धर्मिणि श्रुतेन ब्रह्मशब्देनैव गुणपूर्तिवाचिनाऽल्पगुणाज्जीवनिकायाद्विलक्षणत्वसिद्धेः । तस्य गुणपूर्तिवाचिता च—"अथ कस्मादुच्यते ब्रह्मेति । बृहन्तो ह्यस्मिन्गुणा" इति श्रवणात् स्वरूपतो गुणतश्चाऽपरिच्छिन्नत्वरूपविषयावयवत्वात्तदनुरोधाच्चेति ।

तत्र निर्विशेषजीवरूपस्य ब्रह्मणश्श्रुत्यन्तनिरूप्यत्वमङ्गीकृत्य शास्त्रनिरूप्यत्वासंभवपूर्वपक्षो गुरूणां प्रणतिपरंपराविषये महापुरुषे तच्छिष्याश्रितस्वप्रणामानर्हत्ववादमनुकरोति। प्रमाणशिखामणयो हि वेदा नितान्तमनधिगतमर्थमन्विच्छन्ति । पौरुषेयाणि तु शास्त्राण्युपायान्तरेणाऽवगन्तुं शक्येष्वर्थेषु श्रोतृबुद्धिसौकर्यार्थं प्रवर्तमानानि स्वोक्तमप्यर्थमविस्मरणार्थमाम्रेडयन्ति । न तथाऽनधिगतार्थव्यसनितामनुभवन्ति । ततश्च यदि वेदान्ता अपि स्वप्रकाशजीवस्वरूपमात्रे कर्तृत्वभोक्तृत्वादिधर्मरहिततयाऽकर्मशेषतामप्रतिपद्यमाने स्वातन्त्र्येण पर्यवस्यन्ति तदा शास्त्रस्य तत्र पर्यवसाने काऽनुपपत्तिः ? पूर्वपक्षिणाऽपि हि वेदान्तानां प्रामाण्यसंरक्षणाय स्वप्रकाशजीवस्वरूपमात्रपरत्वेऽप्यनधिगतार्थत्वमुपपादनीयम् । ततश्च शास्त्रस्याऽपि तेन सविषयत्वोपपत्तिरिति भावः ॥ ४ ॥

ननु पूर्वपक्षिणा वेदान्तानां प्रामाण्यं न संरक्षणीयम् । ते ह्युपक्रमादिन्यायैः स्वप्रकाशजीवस्वरूपमात्रपरा एव । तस्य चाऽनधिगतत्वं कथमपि समर्थयितुं न शक्यते । तथा सति यदि तेषां प्रामाण्यं न स्यात्; मा भूत् । न्यायलब्धेऽर्थे किं कुर्मः ? अत एव तदर्थमधिकृत्य शास्त्रमनारम्भणीयं सर्वथैव विषयालाभादिति पूर्वपक्षः क्रियते । काऽत्रानुपपत्तिरित्याशङ्क्याऽऽह—

**प्रामाण्यं सिद्धमेव ह्यकृतकवचसां त्वन्मते तर्कशास्त्रं**
**शास्त्रस्याऽङ्गं यदस्य स्मरसि हरिकृतं ब्रह्मतर्काभिधानम् ।**
**तच्चेद्धव्येन नित्यस्फुरदगुणलवप्रत्यगात्मैदमर्थ्ये**
**तन्निर्वाहाय तेषां सगुणविषयता पूर्वपक्षेऽपि न स्यात् ॥ ५ ॥**

इत्थं हि तव मतमस्ति—विष्णुना नारायणरूपेणाऽतिविस्तरेण कृतं पुनर्व्यासरूपेण तेन संक्षिप्तञ्च ब्रह्मतर्काभिधानं शास्त्रम् । तदेव चतुर्दशविद्यास्थानान्तर्गततर्कशास्त्रम् । न तु गौतमादिप्रणीतम् । तच्चाऽस्य मीमांसाशास्त्रस्याऽङ्गम् । इदं हि सर्वेषां कर्म-ब्रह्मकाण्डरूपाणां वेदानां सकलगुणपरिपूर्णो भगवानेव मुख्यार्थ इति निर्णयाय प्रवृत्तम् । तत्वेन निर्णयार्थानां वेदानां तदर्थनिर्णायकानां प्रत्यक्षादीनामुपक्रमादीनां श्रुतिलिङ्गादीनां च स्वरूपप्रामाण्यतद्बलाबलनिर्णायकत्वेनैतदपेक्षितमिति । तदुक्तं **अनुव्याख्याने**—

(१)प्रमाणन्यायमीमांसा क्रियते तर्कशास्त्रतः ।
मानन्यायैस्तु तत्सिद्धेः मीमांसामेयशोधनम् ॥
ब्रह्मतर्कञ्च भगवान् स एव कृतवान् प्रभुः ।
पञ्चाशत्कोटिविस्तारान्नारायणतनौ कृतात् ॥
उद्धृत्य पञ्च साहस्रं कृतवान् बादरायणः ॥ इति ॥

एवं च यदि वेदान्तानामखण्डजीवस्वरूपपरत्वे मानान्तरसिद्धतत्स्वरूपानुवादमात्र-पर्यवसायित्वेन प्रामाण्यं न निर्वहेत्, तदा तन्निर्वाहाय तेषामुपक्रमादिस्वारस्यावगतमपि तद्विषयत्वं परित्यज्य मानान्तरानधिगतसगुणब्रह्मविषयतयैव पूर्वपक्षिणाऽप्यङ्गीकर्तव्या स्यात् । न हि सिद्धप्रामाण्यानां वेदवाक्यानामनधिगतार्थपर्यवसानविरोधी क्वचिदपि वाक्यस्वारस्याऽनुरोधोऽस्ति । (२)'त्रेधा तण्डुलान्विभजेत्'

१ १. १. १. सूत्रीयानुव्याख्यान एवेमानि पद्यानि ।

२ अभ्युदयेऽष्टिप्रकरणे श्रुतमिदं वाक्यम् "यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान्विभजेत् ये मध्यमास्स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात् ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम् (तै. स., २ का. ५ प्र. ४. अनु.) अमावास्यायां प्रातरारब्धव्ये दर्शयागे भ्रमाद्यदि पूर्वस्मिन्दिने प्रातरारभ्येत तदा चतुर्दशीसत्वाच्चन्द्रमा दृश्येत । तदा चाऽकाले कर्माऽऽरब्धं भवति । तत्र प्रायश्चित्तविधानमिदम् । एवं चास्य वाक्यस्याऽयमर्थः—यद्यमावास्यायां प्रातर्दर्शार्थहविर्निर्वापणानन्तरं प्राच्यां दिशि चन्द्रमा दृश्येत तदा निरुप्तांस्तण्डुलान् मध्यमाणिष्ठस्थविष्ठात्मना त्रेधा विभजेत् । तत्र मध्यमैस्तण्डुलैः पुरोडाशं

(१)"स्रष्टीरुपदधाति"(२)"कपालेषु श्रपयति" इत्यादिषु तत्स्वारस्योपस्थितानप्यन्यतः

निष्पाद्य दात्रेऽग्नये यागं कुर्यात् । स्थविष्ठांस्तण्डुलान् इन्द्रार्थं पूर्वं निरुप्ते दधनि श्रपयित्वा प्रदात्रे इन्द्राय यागं कुर्यात् । येऽणीयांसस्तण्डुलाः तान् पयसि श्रपयित्वा विष्णवे शिपिविष्टाय यागं कुर्यात् इति । अत्र 'ये मध्यमाः' येऽणिष्ठाः, 'ये स्थविष्ठा' इत्युपरितनवाक्यैरेव विभागस्य सिद्धत्वात् त्रेधा तण्डुलानित्यस्य विभागविधानार्थत्वे अनधिगतार्थता न सिध्यतीति कृत्वा तस्य पूर्वदेवतापनयनार्थत्वम् । अर्थात् पूर्वं निर्वापणकाले याः तण्डुलादिभिर्हविर्भिः संबन्धितास्ता अपनीयन्ते तेभ्यस्तण्डुलादिभ्य इत्युक्तं अभ्युदितेष्ट्यधिकरणे पूर्वमीमांसायां षष्ठाध्याये पञ्चमपादे ॥

१ 'स्रष्टीरुपदधाती'ति चयनप्रकरणे श्रुतमिदं वाक्यम् । अत्र स्रष्टिशब्दः तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक्च मतोः ( पा. सू., ४. ४. १२६ ) इति सूत्रेण स्रष्टिशब्दान्मतुपि यत्प्रत्यये च कृते छान्दसत्वेन प्रत्ययलोपे च निष्पन्नः स्रष्टिवाचकपदघटितमन्त्रोपधेयेष्टकावाची । "एकयाऽस्तुवत" इत्यनुवाके पठिताः "तिसृभिरस्तुवत, ब्रह्माऽसृज्यत" इत्यादयो मन्त्राः सृजिपदघटिताः । तान् मन्त्रानुच्चार्य या इष्टका उपधीयन्ते तास्स्रष्टिशब्देनोच्यन्ते । अत्र मन्त्राणां प्रकरणप्राप्तत्वात् न विधानम् । उपधानमपि "इष्टकाभिरग्निं चिनुत" इति चयनविधिनैवार्थात् प्राप्तमिति तदपि न विधेयम् । अतः अर्थवादार्थमेवेदं वचनमिति राद्धान्तितम् ॥

२ 'कपालेषु श्रपयती'त्यत्र न तावच्छ्रपणं विधीयते यदाग्नेयोष्टाकपाल इति पुरोडाशविशिष्टयागविधायकोत्पत्तिवाक्येनैव तस्य प्राप्तत्वात् । नापि कपालविधानम् । अष्टाकपाल इति पदेनैव अष्टसु कपालेषु संस्कृतः पुरोडाश इत्यर्थकेन कपालानामपि प्राप्तत्वात् । तस्मात्पुरोडाशसंपादनाक्षिप्तद्रव्यनियमविधिपरत्वं व्रीहिशास्त्रस्य । तस्य च फलं यत्र श्रपणं नास्ति न तत्र व्रीहीणां प्रकृतित्वम् । यथा—चित्रेष्टितण्डुलादौ इति । उक्तञ्च दीक्षितेन्द्रैः **विधिरसायने**—तस्मादन्यलभ्यश्रपणविधानेन प्रकृत्युपादानमाक्षिप्याऽऽक्षिप्तोपादानापेक्षितप्रकृतिद्रव्यनियममात्रपरत्वं व्रीहिशास्त्रस्याऽऽपाद्य तद्द्वारा चित्रेष्टिगततण्डुलद्रव्यकयागात्प्रकृत्युपादाने व्रीहिनियमव्यावर्तनार्थोऽयं विधिः । असति ह्यस्मिन्विधौ व्रीहिशास्त्रमेव जात्यवस्थाविशेषविशिष्टप्रकृतिद्रव्योपादानपर्यन्तमिति तण्डुलयागादर्थलोपेन श्रपणनिवृत्तावपि व्रीहिशास्त्रस्य श्रपणमुखप्रवृत्तिकत्वाभावेन चोदकादङ्गान्तरैस्सह व्रीहिरूपप्रकृतिद्रव्योपादानमपि प्राप्नुयात् । सति त्वस्मिन् विधौ विहितस्य श्रपणस्य प्रयोगमध्ये ऽनुष्ठेयतया तत्र तत्प्रकृत्युपादाने तत एवार्थतस्सिद्धेः व्रीहिशास्त्रं प्रकृतिद्रव्ये जात्यवस्थाविशेषनियममात्रार्थं भवति—प्रयोगमध्ये श्रपणार्थं प्रकृतिद्रव्याण्युपाददीतेति यत्तद्व्रीहिजातीयानि सतुषावस्थानीति । तथा च व्रीहिशास्त्रस्य प्रकृत्युपादानप्राप्त्यर्थं श्रपणविध्यपेक्षित्वे सत्येवं व्यवस्था सिध्यति ।

प्राप्तिमतोऽर्थान् परित्यज्य लक्षणया प्रत्यक्षविध्यन्तरद्वारा कल्पितविध्यन्तरद्वारा वाऽनधिगत एवाऽर्थे पर्यवसानस्याऽङ्गीकृतत्वात् । विश्वजित्स्वर्गकामाधिकरणपूर्वपक्षयोरपि नाऽनधिगतार्थत्वरूपप्रामाण्यत्यागः, किन्तु फलाभावादनुष्ठानालाभमात्रम् । उक्तं हि **तन्त्ररत्ने** स्वर्गकामाधिकरणपूर्वपक्षे–नन्वेवमप्रमाणं स्यात् । न । गम्यमाने प्रवर्तनामात्रे प्रमाणमेव । न हि पुरुषप्रवृत्त्यधीनं वेदप्रामाण्यम् । यदि हि तथा स्यात्ततः प्रमाणभूतवेदविहितस्यानुष्ठानं तदनुष्ठानाय च प्रामाण्यमितीतरेतराश्रयापात इति । तस्मात्त्वत्पूर्वपक्षिणा वेदान्तानां ब्रह्मतर्कसिद्धप्रामाण्याविघाताय निर्विशेषजीवविषयत्वेऽपि वाऽनधिगतविषयत्वमद्वैतिवत्समर्थनीयम् । तद्विलक्षणसगुणब्रह्मविषयत्वं वाऽङ्गीकरणीयम् इत्युभयथापिन निर्विषयत्वशङ्कावकाश इति भावः ॥ ५ ॥

परमते मतान्तरसिद्धोपक्रमादिन्यायजालमवलम्ब्य पूर्वपक्षप्रवर्तनमपि न युक्तमित्याऽऽह—

**साक्षी जीवस्सुखादीन्यनिशमनुभवन्सर्वमानाधिकस्ते**
**तेषां तर्के त्वदिष्टो बलवदबलतासंविभागश्च सिद्धः ।**
**तस्याऽत्यन्तानुकूलं श्रवणमपि तव प्राग्विचारादपेक्ष्यं**
**श्रुत्यन्तानां कुतस्स्यादगुणविषयतापूर्वपक्षस्य लाभः ॥ ६ ॥**

एवं हि तव मतम्–सुखादिकं साक्षिवेद्यम् । साक्षी च सर्वप्रमाणाधिकः नित्यत्वेनाप्रामाण्यहेतुदोषजन्यत्वाभावात् । साक्षिविषये सुखदुःखेच्छाद्वेषादौ कदापि संशयविपर्ययोरदर्शनात् । दूरसंजातजलादिज्ञानप्रामाण्यपरीक्षाधारायाः ततो जलावगाहनादिप्रयुक्तसुखादिग्राहकं साक्षिणमासाद्यैव विश्रान्तेश्च । अतः साक्ष्यनुभवविरुद्धेऽर्थे श्रुतिरपि न प्रमाणमिति । इदं च साक्षिणो बलवत्त्वं तव (१)मीमांसारूपे **ब्रह्मतर्क** एव सिद्धम् । अतोऽत्र साक्ष्यनुभवविरुद्धं वेदान्तानां सुखदुःखादिबन्धरहितनिर्विशेषजीवस्वरूपमात्रपरत्वमपेक्ष्य पूर्वपक्षप्रवर्तनं न युज्यते ।

अपि च सर्वेषामपि प्रमाणानां त्वदिष्टबलाबलविभागस्तव **ब्रह्मतर्क** एव प्रसिद्धः । अतो वाक्यार्थनिर्णयप्रमाणभूतानामुपक्रमादीनामुपक्रमादुपसंहारो बलीयानित्यादिरूपस्त्वदिष्टो मानान्तरविलक्षणो बलाबलविभागोऽपि तत्रैव सिद्धः ।

वैकृते यत्र हविषि श्रपणमपेक्षितं तत्र तस्य प्रयोगमध्येऽनुष्ठानं यत्र च तत्तत्र प्रकृत्युपादानम् । यत्र प्रकृत्युपादानं तत्र व्रीहिनियमः । एवं च सति तण्डुलयागादर्थे लोपेन श्रपणनिवृत्तौ तन्मूलकं व्रीहिनियमपर्यन्तं निवर्तत एवे" ति ।

१ प्रमाणमीमांसेति ग० पु० ।

(१) उपक्रमादिलिङ्गानां बलीयो ह्युत्तरोत्तरम् ।
श्रुत्यादौ पूर्वपूर्वं च ब्रह्मतर्के विनिर्णयात् ॥

(२)इत्यनुव्याख्यानोक्तेः । त्वदभिहितोपक्रमादिबलाबलानुसारी सर्ववेदान्तानामर्थश्च त्वन्मते विचारात् प्रागेव गुरुमुखादवगन्तव्यः । यावच्छक्ति सकलवेदाध्ययनपूर्वकं प्रतिवाक्यम् 'अस्य वाक्यस्याऽयमर्थ' इति सर्वेषां वेदवाक्यानां गुरुमुखादर्थग्रहणं श्रवणम् । तच्च यावदज्ञाननिवृत्त्येकस्मादेव गुरोर्वा, तत्तदुत्तमगुरुलाभे बहुभ्यो गुरुभ्यो(३) वा सम्यगावर्तनीयम् । एवं श्रवणावृत्तिलब्धस्य वाक्यार्थग्रहस्य स्थिरीकरणार्थं न्यायविचारात्मकं युक्त्यनुसन्धानं मननम् । न तु तदेव श्रवणम् । ततश्च विचारशास्त्रं मननादिविधिमूलम्, न श्रवणविधिमूलम्, इति हि तव मर्यादा । तथा च निर्विशेषनिष्प्रपञ्चजीवाभेदादिपरवाक्यानामपि सगुणप्रपञ्चजीवभिन्नस्वाभिमतब्रह्मपरत्वमेव बोधयतां स्वाप्तानां गुरूणां सकाशाद्बहुधाऽऽवर्तितश्रवणलब्धसकलवाक्यावधारणस्तदनुगुणप्रमाणस्वरूपतद्बलाबलव्यवस्थापकब्रह्मविचारशास्त्रेतिकर्तव्यतातर्काभ्यासेन लब्धश्रवणसंवादस्तदनन्तरं तदर्थमननात्मके विचारे प्रवर्तमानः शिष्यः प्रत्यक्षादेस्तर्कशास्त्राभ्यासलब्धप्रमाणबलाबलस्याऽप्यनुगुणमनेकाप्तोपदिष्टं तं (४)तमर्थं परित्यज्य सर्वेषां वेदान्तवाक्यानां निर्विशेषजीवचिन्मात्रमेवाऽर्थ इति सर्वविरुद्धमर्थं कथमाशङ्केत ?। तत्तदाशङ्काभावे च कथं पूर्वपक्षोदयः ? शिष्यस्य प्रागेव गतार्थेन प्रतिबद्धुमशक्यतयोदेतुं योग्या शङ्कैव हि वादकथारूपे शास्त्रे पूर्वपक्षो नाम । अतोऽत्र शिष्यस्य प्राङ्निर्वृत्तेन श्रवणेनाऽङ्गविद्याभ्यासेन च प्रतिबद्धुं शक्या शङ्का नोदेतुमर्हतीति तव मते नैवं पूर्वपक्षावकाशोऽस्तीति भावः ॥ ६ ॥

१ उपक्रमस्य उपसंहारापेक्षया बलवत्त्वं पूर्वतन्त्रे तृतीयतृतीयप्रथमे सिद्धान्तितम् "वेदो वा प्रायदर्शनादि"त्यत्र । एवं "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादि"ति सूत्रे श्रुतिलिङ्गादीनां पूर्वपूर्वप्राबल्यं उत्तरोत्तरदौर्बल्यं च स्थापितं तृतीयतृतीय एव । न्यायोऽयं सर्वैरपि तन्त्रान्तरकारैरङ्गीक्रियत एव । भवन्मते तु तद्विरुद्धमेवोच्यत इति । २ अनु. २२१. १. ९.

३ पूर्वस्मादुत्तमो लब्धः स्वयमेव गुरुर्यदि । गृह्णीयादविचारेण विकल्पस्समयोर्भवेत् इति ( मध्वभाष्य ३. ३. ४६ ) । अत्र **तत्वप्रकाशिका**—न पूर्वप्राप्त एव गुरुरिति नियमः । पश्चात्तनोऽपि स्वीकार्यो भवति । न च वैयर्थ्यम् । गुरुपरिग्रहस्य समग्रहानुग्रहार्थत्वात् । स च पूर्वतमेन समोऽधिको वा समग्रहानुग्रहं करोति चेत् स्वीकार्यो नाऽधम इति । ( तत्त्व. १७८. २. २. )

४ तत्परित्यज्य ग० पु० ।

एवं परमर्यादया पूर्वपक्षस्य निरवकाशत्वमुक्तम् । हेत्वन्तरेणाऽपि तदाह—

श्रुत्यन्तानामखण्डो विषय इति च ते केन बोद्धव्यमेतत् ?
न्यायैस्तादर्थ्यमेषां घटयदिति दृढैः शास्त्रमेकं न चेत्स्यात् ।
तच्चेदङ्गीक्रियेत प्रतिहतविभिदप्रत्यगात्मैकनिष्ठं
कस्याऽनारम्भसिध्यै प्रभवतु(१) भवतः पूर्वपक्षप्रयासः ॥ ७ ॥

सर्वेषां वेदान्तानां निर्विशेषजीवस्वरूपपरत्वं प्रबलन्यायैः प्रतिष्ठापयच्छास्त्रमिष्यते वा न वा ?। न चेत् प्रत्यक्षादिविरुद्धं सविशेषत्वादिविषयानेकावान्तरवाक्यकृतान्तःकलहधीप्रतिरुद्धं तेषां तत्परत्वं न सिध्येदिति तत्सिद्धिसापेक्षानारम्भपूर्वपक्षोत्थापनं न स्यात् । इष्यते चेत् तदारम्भमपेक्ष्य विषयत्वाभावेन तदनारम्भस्समर्थ्येत इति व्याघातः स्यादित्यर्थः ॥ ७ ॥

नन्वेवं सति **वाचस्पतिविवरणकाराभिमतयोर**ध्यासाधिकरणपूर्वपक्षयोर्व्याघातः स्यात् । **वाचस्पतिमते** हि प्रत्यगात्मन एव (२)ब्रह्मत्वात् तस्य चाऽहमिति प्रकाशमानत्वाल्लोकसिद्धस्य तस्य विचारार्थं शास्त्रं नाऽऽरम्भणीयमिति पूर्वः पक्षः । **विवरणकारमते** तु प्रत्यग्ब्रह्मैक्यस्य विषयत्वेनाऽभिमतत्वात् प्रत्यग्ब्रह्मणोश्च विरुद्धस्वभावयोरैक्यासिद्धेः तद्विचारार्थं शास्त्रं नाऽऽरम्भणीयमिति पूर्वः पक्षः । न च प्रत्यगात्मन एव ब्रह्मत्वं प्रत्यग्ब्रह्मणोरैक्यं च शास्त्रं विना सिध्यति, येन व्याघातो न स्यादित्याशङ्क्याऽऽह—

सिद्धेऽसिद्धे च सिद्धान्त्यभिमतविषये दूषणं चेत्क्रियेत
न्यायापेक्षा न तस्योन्मिषति निजमतप्रक्रियार्थानुवादे ।
सिद्धान्त्यस्वीकृतेऽर्थे यदि तु विषयतापादनं पूर्वपक्षे
कर्तव्यं तर्ह्युपायः कथमिव सुधिया तत्र नाऽपेक्षणीयः ॥ ८ ॥

प्रत्यगात्मन एव ब्रह्मतया विषयत्वं प्रत्यग्ब्रह्मणोरैक्यस्य विषयत्वं च सिद्धान्त्यभिमतमेवाऽनूद्य तयोरैक्यस्य सिद्धत्वेनाऽन्यस्याऽसिद्धत्वेन विषयत्वासंभव इति तौ पूर्वपक्षौ

---

१ प्रभवति ग० पु० ।

२ बृहत्वाद्बृंहणत्वाच्चात्मैव ब्रह्मेति गीयते । स चायमाकीटपतङ्गेभ्यः आ च देवर्षिभ्यः प्राणभृन्मात्रस्येदंकारास्पदेभ्यो देहेन्द्रियादिमनोबुद्धिविषयेभ्यो विवेकेन "अहं" इत्यसन्दिग्धाविपर्यस्तापरोक्षानुभवसिद्ध इति न जिज्ञासास्पदं "न हि जातु कश्चिदत्र सन्दिग्धे अहं वा नाहं वेति । (**भामती** १. १. १. पृष्ठ ५ निर्णय सं० ।)

प्रवृत्तौ । तत्र कुतः प्रत्यगात्मैव ब्रह्मेति वा कुतः प्रत्यग्ब्रह्मणोरैक्यमिति वा पूर्वपक्षिणं प्रति सिद्धान्तिनो हेत्वाकाङ्क्षा न संभवति, सिद्धान्त्यभिमतस्यैव तयोर्विषयत्वस्य पूर्वपक्षेऽनूदितत्वात् । ततस्तत्र विषयोपपादकशास्त्रारम्भमनपेक्ष्य तदनारम्भपूर्वपक्ष-प्रवृत्तेर्न व्याघातः। त्वन्मते तु निर्विशेषजीवचिन्मात्ररूपं ब्रह्मेति सिद्धान्त्यनभिमत एवाऽर्थे विषयत्वमापाद्य पूर्वपक्षप्रवृत्तिरिति तस्मिन्मते सिद्धान्तिनो हेत्वाकाङ्क्षोदयेन तदुपपाद-कशास्त्रारम्भस्य त्वत्पूर्वपक्षिणाऽपेक्षणीयत्वात् व्याघातो भवत्येवेति (१)भावः ॥ ८ ॥

ननु सिद्धान्त्यनभिमतमर्थं पुरस्कृत्य शास्त्रानारम्भपूर्वपक्षे तदुपपादनाय शास्त्रारम्भो पेक्षित(२) एवेति व्याघातश्चेत्, पूर्वमीमांसाद्याधिकरणपूर्वपक्षेऽपि व्याघातस्स्यात् । स खल्वेवं प्रवृत्तः–अध्ययनविधिना (३)विश्वजिन्न्यायादध्ययनस्य स्वर्गार्थतावबोध-केनाऽर्थज्ञानेतरफलार्थत्वं नीयमानानां वेदानां विषनिर्हरणादिमन्त्राणामिवाऽर्थविवक्षा-ग्राहकं प्रमाणं नाऽस्तीति वेदवाक्यान्यापाततोऽपरिपूर्णानुपपन्नार्थानि (४)लक्षणानुष-ङ्गाध्याहारव्यवधारणकल्पनाधिकार्थकल्पनादिभिरवश्यमुपपादनीयानीत्यत्र नियामकाभावा-दनुपपत्तिशङ्काकलुषितवेदार्थविचारात्मकं शास्त्रं नाऽऽरम्भणीयमिति । तत्रापि स्वाध्याया-ध्ययनस्य स्वर्गार्थत्वं सिद्धान्त्यनभिमतमेव पूर्वपक्षिणोपपाद्यमिति तदुपपादकविश्वजि-न्न्यायादिप्रतिपादकशास्त्रारम्भापेक्षेत्याशङ्क्याऽऽह—

**एकं वाक्यं विचार्यं यदि भवति नयो वाऽपि सर्वत्र तुल्यः**
**तत्किंचिन्न्यायक्लृप्त्याऽनभिमतरचना युज्यते पूर्वपक्षे ।**
**सर्वेषामेव नानाविधनयनिकरानेयतात्पर्यसीम्नां**
**वेदान्तानां विमर्शाद्विषयविरचना त्वेकमीहेत शास्त्रम् ॥ ९ ॥**

धर्मजिज्ञासासूत्रेऽध्ययनवाक्यमेकमेव विचार्यम् । तस्य सिद्धान्त्यभिमतदृष्टफल-रूपार्थज्ञानार्थत्वे वैयर्थ्यप्रसङ्गात् सर्वापेक्षितस्वर्गार्थत्वं वाच्यमिति शक्यं पूर्वपक्ष एव

---

१ इत्यर्थः ग० पु० ।     २ अपेक्षित इति ग० पु० ।

३ यस्य कर्मणस्त्वोत्पत्तिवाक्ये न फलश्रवणमस्ति वाक्यान्तरमपि फलबोधकं किञ्चिन्नास्ति तस्य सत्यां फलाकाङ्क्षायां सर्वपुरुषाभिलषितत्वेन स्वर्गस्यैव तत्फलत्वं कल्पनीयमिति यो न्यायः चतुर्थतृतीये निरूपितः स विश्वजिन्न्यायः । तत्र 'विश्वजिता यजेत' इति वाक्यमुदाहृत्य विचारितत्वाद्विश्वजिन्न्याय इति व्यवहारः ।

४ यत्राऽर्थवादानां यथाश्रुतार्थपरत्वे प्रयोजनं न लभ्यते तत्र लक्षणादीनामर्था-न्तरनयनं क्रियते । उक्तं हि शाबरे—"अथाऽध्याहारेण वा विपरिणामेन वा व्यवहितक-ल्पनया वा व्यवधारणकल्पनया वा गुणकल्पनया वा कश्चिदर्थः कल्पयिष्यत" इति शा. भा. पू. मी., १।२।१ सूत्रे ।

किञ्चिन्न्यायोपपादनमिति तदर्थं न शास्त्रारम्भापेक्षा । अध्ययनविधिद्वारा तदुपात्तानां सर्वेषामपि वेदवाक्यानां विचार्यत्वेऽपि तेषामविवक्षितार्थत्वे पूर्वपक्षिणोपपादनीये विप-निर्हरणादिमन्त्रवदन्यार्थनीयमानत्वमेक एव न्यायः । सोऽपि पूर्वपक्ष एव व्युत्पादयितुं शक्य इति तदर्थमपि न शास्त्रारम्भापेक्षा । न हि कियन्तमपि न्यायमप्रदर्श्य पूर्वपक्षः क्रियते । इह तु त्वन्मते नैकमेव वेदान्तवाक्यं विषयः । तस्यैकस्य केनचिन्न्यायेन पूर्वपक्ष एव व्युत्पादितेन निर्विशेषचिन्मात्रपरत्वव्यवस्थापनेन सिद्धान्त्यभिमते सगुणे ब्रह्मणि प्रमाणाभावात्तद्विचारार्थमपि शास्त्रं नारम्भणीयमिति वाच्यम्, त्वदभिमतं च । न च त्वन्मते सर्वेषां वेदान्तानां निर्विशेषजीवचिन्मात्रपरत्वे सार्वत्रिक एको न्यायोऽस्ति । उपक्रमादीनां श्रुतिलिङ्गादीनां च परश्शतं बाध्यबाधकभावप्रकारशालिनां तत्र तत्र व्यवस्थितत्वात् ।

न च तेषां सर्वेषामेकस्मिन्नेवाऽत्र पूर्वपक्षे व्युत्पादनं युक्तम् । तथा सति सर्वस्याऽपि शास्त्रस्यैकाधिकरणकल्पनाप्रसङ्गात् । तस्मात्तावतां न्यायानां व्युत्पादकमेकं शास्त्र-मिहाऽपेक्षितमित्यत्रैव व्याघातो न धर्ममीमांसानारम्भपूर्वपक्ष इति भावः ॥ ९ ॥

एतेन **वाचस्पतिपूर्वपक्षे** प्रत्यगात्मन इदानीमहमिति प्रकाशमानं रूपमध्या-सपरिनिष्पन्नं तदिह न विचार्यम् । किन्तु संसारदशायामनाविर्भूतं निर्विशेषं तस्य तात्त्विकं रूपमस्ति श्रुतिप्रसिद्धम् तद्विचारार्थं शास्त्रारम्भ इति शङ्कावारणाय । **विवरणकार**पूर्वपक्षे प्रत्यग्ब्रह्मैक्यं नाऽसिद्धम्, तत्साधकश्रुतिसद्भावादिति शङ्कावारणाय च बहूनां निर्विशेषवाक्यानामभेदवाक्यानां चाऽन्यपरत्वं वक्तव्यमिति तदुपपादकशास्त्रारम्भापेक्षया व्याघातस्स्यादित्यपि शङ्का निरस्ता । एकयैव प्रत्यक्षादि-विरोधयुक्त्या तेषामन्यपरत्वकल्पनात् ॥ ९ ॥

स्यादेतत्—अस्त्येव शारीरकशास्त्रादस्मादन्यत्सर्ववेदान्तानां निर्विशेषपरत्वव्युत्पादकं शास्त्रम् । तदवलोकनेनैव पूर्वपक्षः स्यादित्याशङ्क्याऽऽह—

**तच्छास्त्रं चेदितोऽन्यत्क्षणचरमतवत्कल्प्यते पूर्वसिद्धं**
**जीवं तस्य स्वसिद्धं विषयमुपयतो हन्त तस्यैव सोऽस्तु ।**
**तेनैकार्थ्ये विरोधेऽप्यपहृतविषयं शङ्क्यते चेदिहेदं**
**जीवासंदिग्धतोक्तिः कथमिव घटनी पूर्वपक्षस्य ते स्यात् ॥१०॥**

तस्य शास्त्रस्य स्वप्रकाशोऽपि जीवो विषयः स्वीक्रियते चेदस्यैव शास्त्रस्य स विषयोऽस्तु । किमप्रसिद्धशास्त्रान्तरकल्पनया ? तत्कल्पनया पूर्वपक्षसमर्थनेऽपि स्वप्रकाशस्य विषयत्वासंभवयुक्तिव्याहतत्वापरिहारात् । नन्वत्र स्वप्रकाशस्य विषयत्वा-संभवयुक्त्याऽनारभ्यमिति न पूर्वः पक्षः; किन्तु वेदान्तानां स्वप्रकाशचिन्मात्रपरत्व-

व्यवस्थापकं तावच्छास्त्रमस्तु । इदमपि तथाभूतमिति चेत्तेन गतार्थम् । सगुणब्रह्मपरत्वव्यवस्थापकं चेत्तेन बाधितार्थमित्युभयथापि तदपहृतविषयत्वादनारभ्यमिदं शास्त्रमित्यतो न व्याघात इति चेत्; एवं तर्हि जीवस्य स्वप्रकाशत्वेनाऽसंदिग्धत्वोक्तिः पूर्वपक्षेऽनुपयुक्ता तद्विरुद्धा च स्यात् । तदेव हि त्वया पूर्वपक्षसमर्थनार्थमुक्तम् । कश्च कणभुगादिशास्त्रेणाऽप्यपहृतविषयतयाऽनारम्भे शङ्कितुं शक्ये निर्विशेषशास्त्र एव तव पक्षपातः ? (१) समयपादे तत्सर्वं निराकर्तव्यमिति चेत् इदमपि तथा । अनभिमतं शास्त्रान्तरमस्ति चेत्तत्रैव निराकर्तव्यं स्यात् । अनभिमततन्त्राणां सर्वेषामपि स्वातन्त्र्येण पृथक् पृथक् तत्रैव निराकरणात् । तस्मादनिराकरणादवसीयते—इदमेव तच्छास्त्रं नाऽन्यदिति ॥ १० ॥

नन्वेतावताऽपि स्वप्रकाशस्य विषयत्वानुपपत्तिरसमाहितैवेत्याशङ्क्य परस्याऽपि संमतेनाऽविद्यावरणेन जीवस्याऽनधिगतत्वमुपपादयन् परिहरति—

**का चात्रानुपपत्तिर्जीवस्य स्वप्रभस्य विषयत्वे ।**
**आविद्यकमावरणं जानीषे चानुमन्यसे च त्वम् ॥ ११ ॥**

ननु भावरूपाज्ञानं नाऽनुभवामः । न चाऽनुमन्यामहे । न जानामीत्यनुभवस्य ज्ञानाभावविषयत्वसमर्थनादित्याशङ्क्याऽऽह—

**पुंस्त्वादिवत्त्विति नये पुरुषस्य हि स्व-**
**मानन्दमावृतमभिन्नमुपेत्य नित्यम् ।**
**तत्त्वावबोधसमनन्तरमस्मदुक्तं**
**मुक्तौ तदावरणभञ्जनमन्ववादीः ॥ १२ ॥**

एवं हि तव मतम्—नित्यानन्दस्वरूप एव सन्मुक्तियोग्यो जीवः । न तु तस्य मुक्तावागन्तुकोऽस्त्यानन्दः । विकाररूपाणां धर्माणां मुक्तावभावात् । न च तदानीं पुरुषार्थरूपस्याऽऽनन्दस्य संसारदशायामपि सत्वे मुक्तिसंसारयोरविशेषप्रसङ्गः । तस्येदानीमावृतत्वाभ्युपगमात् । न चाऽनादिभावरूपमज्ञानं तदावरकं सिद्धान्ते नेष्यते सादिना तु कामकर्मादिना न निर्वाहः । सृष्टिप्रलययोस्तद्वृत्त्यभावेन मुक्ताविवाऽऽनन्दस्फूर्तिप्रसङ्गादिति वाच्यम् । सिद्धान्तेऽपि सत्यस्याऽनादेः जीवाश्रितस्य तं प्रति तदीयानन्दादिकं ब्रह्मस्वरूपतद्गुणगणादिकं चाऽऽवृण्वतो मायाविद्याप्रकृत्यादिशब्दवाच्यद्रव्यरूपस्य ज्ञानविरोधिनो भावरूपस्याऽज्ञानस्य "अनादिमायया सुप्तो यदा जीवः प्रबुध्यते" "भूयश्चान्ते विश्वमायानिवृत्तिरि"त्यादिश्रुतिस्मृतिप्रतिपन्नस्येष्यमाणत्वात्तस्य च परमेश्वरापरोक्ष-

(१) शारीरकमीमांसाया द्वितीयाध्यायस्य द्वितीयपादः समयपादः ।

ज्ञानेन निवृत्तौ प्राक् सत एवाऽऽनन्दस्य बाल्येऽपि सतः पुंस्त्वादेर्यौवन इव मुक्तावभिव्यक्तिः । सुषुप्त्यादौ तत्सत्वेऽपि कामकर्मादिवृत्त्यभावादीषदभिव्यक्तिः । तस्याऽऽनादित्वेन स्वोपादानगतोत्तरावस्थारूपनिवृत्त्यसंभवेऽपि प्रमाणसिद्धनिवर्तकोपनिपातबलात् रूपप्रध्वंसरूपा निवृत्तिः । तच्च प्रतिजीवं भिन्नमित्येकमुक्तौ न सर्वमुक्तिरिति । सर्वोऽप्ययमर्थः (१) "पुंस्त्वादिवत्तस्य सतोऽभिव्यक्तियोगादि"त्यधिकरणे प्रतिपाद्यत्वेन (२)त्वदभिमतोऽस्मदीयभावरूपाज्ञानवृत्तानुवाद एव। तदनिर्वचनीयत्वादिकं किञ्चित्परं नेष्यते । तथा च यस्त्वया संसारदशायां प्रकाशमानस्यैव जीवस्य स्वरूपभूतानन्दस्तदानीमावृत इष्यते । स एव श्रुतीनां जीवस्वरूपत्वपक्षेऽनधिगतो विषय इति न तस्मिन्पक्षे विषयाभावासिद्धिरित्यर्थः ॥ १२ ॥

ननु मत्सिद्धान्ते जीवतदानन्दयोरभेदेऽपि गुणगुणिभावनिर्वाहकस्य भेदप्रतिनिधेः विशेषस्य सत्वात् (३)स्वप्रकाशजीवस्वरूपानावरणेऽप्यानन्दस्य युक्तमावरणम्। अखण्डजीवपक्षे जीवतदानन्दयोर्विशेषाभावादयुक्तम् । तदा हि प्रकाशमानस्यैवाऽऽनन्दस्याऽप्रकाशमानत्वं वाच्यम् । न च तद्युज्यते, विरोधादित्याशङ्क्याऽऽह—

**अभेदे दृढे तत्प्रकाशाप्रकाशावविद्याभिधब्रह्मशक्त्योपपन्नौ ।**
**विशेषोऽपि ते जीवचैतन्यरूपं विरोद्धुं न शक्नोति तस्य प्रकाशम् १३**

सत्यं निर्विशेषजीवपक्षे प्रकाशमानस्यैवाऽऽनन्दस्याऽप्रकाशमानत्वं वाच्यमिति । तत्त्वविद्याशक्तिमहिम्नोपपद्यते । सा ह्यघटितघटनापटीयसी ब्रह्मणः शक्तिः तस्यास्तादृशो महिमा नेष्यते चेत् सविशेषाभेदपक्षेऽप्ययं विरोधो दुष्परिहरः । न हि विशेषो-

---

१ वे. सू., २. ३. ३१.

२ **अत्र मध्वभाष्यम्**—यथा बालस्य सदेव पुंस्त्वं यौवनेऽभिव्यज्यते एवं सतामेवाऽऽनन्दादीनां व्यक्त्यपेक्षया तदुक्तिः । 'बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् । स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोः' इति गापवनश्रुतिः इति । ( पृ. ११९ पु. १ पं. ४ कुम्भ. सं. )

**अत्र तत्वप्रकाशिका**—यथा पुरुषयोषिदादीनां अपत्योत्पत्तिशक्तिस्वरूपत्वेऽपि कालतस्तदभिव्यक्तेः "नायं पूर्वं पुमान्, इदानीं तु पुमानि"त्यादि युज्यते । एवं जीवस्वरूपत्वेन मुक्तेः पूर्वमपि सतः ज्ञानानन्दादेः ईश्वरप्रसादेनाऽभिव्यक्तिनिमित्तेनानन्दीभवतीत्यादिव्यपदेशोपपत्तेः प्रागनभिव्यक्तत्वेनाऽनुभवाभावसम्भवात् तदभिव्यक्त्यर्थं च मुमुक्षूणां प्रयत्नोपपत्तिरिति भावः । न चाऽवरणानुपपत्तिः । ज्ञानाभावातिरिक्ततन्निमित्ताविद्याभ्युपगमात् । इति ( तत्व. प्र. पृ. १२० पु. १ पं. ७ कुंभ. सं. )

३ स्वप्रकाशस्य जीवस्य स्वरूपानावरणेऽपि ख० पु० पाठः ।

ऽस्तीत्येतावताऽऽनन्दप्रकाशस्याऽविद्यावरणेन किञ्चिदपनीयते । घटस्य कुड्यावरणेन तत्सन्निकर्षप्रतिबन्धवत् पटशौक्ल्यस्य (१)महारजतावरणेन तद्ज्ञानप्रतिबन्धवच्चाऽत्राऽऽनन्दस्य सन्निकृष्टत्वप्रतिबन्धस्य तत्प्रकाशोत्पत्तिप्रतिबन्धस्य च वक्तुमशक्यत्वात् । नित्यस्य जीवचैतन्यस्यैव तत्प्रकाशकतया तदुत्पत्तेः तत्कारणेन्द्रियसन्निकर्षस्य चाऽनपेक्षणात् । छत्राद्यावरणेनाऽऽलोकस्य विषयसंबन्धप्रतिबन्धवज्जीवचैतन्यस्याऽऽनन्दसंबन्धप्रतिबन्धस्याऽपि वक्तुमशक्यत्वाच्च । तयोर्विषयविषयिभावसंबन्ध( २ )स्याऽनागन्तुकस्वरूपाभिन्नधर्मत्वात् ।

न च मुक्तावानन्दप्रकाशो जीवभिन्नो जन्यज्ञानरूप एवाऽस्तु । जीवचैतन्यस्यैवाऽऽनन्देन विषयविषयिभावसंबन्धस्याऽनागन्तुकस्वरूपाभिन्नधर्मत्वात् । जीवचैतन्यस्यैव वाऽऽनन्देन विषयविषयिभावस्तदानीं जन्योऽस्त्विति वाच्यम् । मुक्तावन्तःकरणविलयेन तद्वृत्तीनां जन्यज्ञानानां जीवे जन्यधर्माणाञ्च त्वयाऽप्यनङ्गीकृतत्वात् । न चाऽऽनन्दजीवचैतन्ययोर्विषयविषयिभावः सदा शक्त्यात्मना स्थितोऽपि मुक्तौ व्यक्त्यात्मतामापाद्यत( ३ ) इति तदानीमेवाऽऽनन्दप्रकशो न प्रागिति वाच्यम् । व्यक्तेरपि नित्यत्वानभ्युपगमे मुक्तौ जीवस्य सविकारत्वापत्तेः । नित्यानित्ययोश्शक्तिव्यक्त्योः भेदप्रसङ्गाच्चेति ॥

"न विशेषात्मता चेयमनित्या शक्तिरूपता ।
सैव यत्सविशेषा स्यात् विशेषोऽन्यो न चाऽप्ययम् ॥"

**इत्यनुव्याख्याने** व्यक्तेश्शक्त्यभिन्नत्वेन नित्यत्वप्रतिषेधाच्च । इदानीमप्यानन्दप्रकाशप्रयुक्तस्य स्वात्मनि परमप्रेम्णोऽनुभवाच्च । तस्मात्त्वन्मतमर्यादया लोकानुभवेन च जीवानन्दे प्रकाशमान एवाऽप्रकाशमानत्वं वक्तव्यम् । तच्चाऽविद्यामहिम्नैवोपपादनीयम् । तथैवोपपादितञ्च **न्यायसुधायाम्** । अतः परमेश्वर एव सत्वादिगुणमप्यविद्याविरोधित्वेनऽविद्यया स्वाधीनया प्रकृत्याख्ययाऽचिन्त्याद्भुतया स्वशक्त्या जीवस्य स्वप्रकाशमपि स्वरूपचैतन्यमाच्छादयतीति युक्तमिति तत्र विशेषोऽकिञ्चित्कर एवेति भावः ॥१३॥

**मुख्यो भेदस्सन्नपि ब्रह्मदृष्टिं नेष्टे रोद्धुं तत्र को वा विशेषः ।**
**तद्दृष्टिस्ते नित्यसिद्धो हि जीवस्तस्मादन्यन्नाऽस्ति तद्गोचरत्वम् ॥१४॥**

जीवस्य ब्रह्मणस्सकाशान्मुख्यो भेदस्सन्नपि ब्रह्मदर्शनं यदा निरोद्धुं न शक्नोति तदा जीवस्य स्वानन्दाद्विशेषो भेदप्रतिनिधिस्तद्दर्शनं निरोद्धुं न शक्नोतीति किमु वक्तव्यमित्यर्थः । भेदोऽपि निरोद्धुं न शक्नोतीत्यत्र विशेषे दर्शित एव न्यायः । स

१ महारजनाञ्जनेनेति पाठान्तरम् । २ भावस्य ग. पु. । ३ "आपद्यत" ग. पु.

तु पूर्वश्लोके संक्षिप्त इह स्पष्टीकृतः । न चाऽव्यक्तस्वभावत्वाद्ब्रह्मणस्तदप्रकाशोपपत्तिरिति वाच्यम् । तथा सति ब्रह्मणः (१)प्रकाशप्रसक्त्यभावेन जीवाश्रितमज्ञानं ब्रह्म तद्धर्मविषयमानन्दपारतन्त्र्यादिस्वधर्मविषयं चेति कल्पनावैयर्थ्यप्रसङ्गात् । उपासनानन्तरमप्यप्रकाशापातेन मोक्षशास्त्रवैयर्थ्यप्रसङ्गाच्च ।

न चाऽव्यक्तस्वभावमपि ब्रह्मोपासनया प्रसन्नं सत् स्वशक्त्यैवाऽपरोक्षीभवति । तच्चाऽपरोक्षज्ञानमन्तःकरणवृत्तिरूपमिति तेनैव मोक्षः । अतः स्वरूपचैतन्यस्य कदाचिदपि ब्रह्म न विषयमिति वाच्यम् । त्वया "तदेतत्प्रेयः पुत्रात्प्रेयो वित्तादि"ति श्रुत्या ब्रह्म परमप्रेमास्पदतयोक्तमिति मुक्तौ स्वरूपानन्दानुभववत्तदनुभवस्याऽपि पुरुषार्थतयाऽङ्गीकृतत्वात् । मुक्तौ माहात्म्यग्रहणपूर्वकस्नेहरूपाया(२) भक्तेरुपासनायाश्च त्वयाऽङ्गीकृतत्वाच्च । तस्मान्मुक्तौ स्वरूपचैतन्यातिरिक्तज्ञानाभावात् स्वरूपचैतन्यस्य च तदानीमागन्तुकविषयविषयिभावासंभवादनादिकालमारभ्यैव ब्रह्मणस्तद्गुणगणस्य च मुक्तियोग्यानां जीवानां( ३ ) स्वरूपचैतन्ये प्रकाशनं वक्तव्यमेव । तथाऽङ्गीकृतश्च त्वया ( ४ )"स्थानविशेषात् प्रकाशादिवदि" ( ५ )त्यधिकरणे । तत्र हि चतुर्मुखादिजीवानन्दानां ब्रह्मानन्दप्रतिबिंबत्वे बिम्बावैचित्र्याद्वैचित्र्यानुपपत्तिमाशंक्य तत्तज्जीवगतानादिभक्त्यादिगुणवैचित्र्यात्तदानन्दादिवैचित्र्यमुपपद्यत इत्युक्तम् । उदाहृतञ्च—

( ६ )"ऐश्वर्यात्परमाद्विष्णोर्भक्त्यादीनामनादितः ।
ब्रह्मादीनां सूपपन्ना ह्यानन्दादेर्विचित्रता ॥" इति ।

एवं ( ७ )"अनुबन्धादिभ्य" इत्यधिकरणान्तरोक्तं

( ८ )"तथाप्यनादिसंसिद्धभक्त्यादिगुणपूगतः ।
लभेद्गुरुप्रसादञ्च तस्मादेव च तद्भवेत् ॥

इति वचनमप्युदाहर्तव्यम् ॥ युक्तञ्चाऽतीतानागतपदार्थानां तत्तत्कालानामव्याकृताकाशस्य तदंशानां प्राच्यादीनां दिशां मनसः परमाणूनां तदवयवपरम्पराणां च साक्षिप्र-

---

१. स्वप्रकाश ग. पु. । २. "स्नेहानुबन्धो यस्तस्मिन्बहुमानपुरस्सरः । भक्तिरित्युच्यते सैव करणं परमेशितुः" इति भक्तेर्लक्षणमुक्तं **मध्वभाष्ये** ३. ३. ५४ । ३. जीवानामिति ग. पु. नास्ति । ४. वे. सू. ३. २. ३५. । ५. **मध्वभाष्ये** यथाऽऽदित्यस्य दर्पणादिस्थानविशेषात् प्रतिबिम्बे विशेषः । एवमानन्दादेरपि । ब्रह्मादिगुणवैशेष्यादानन्दादिपरस्य च । प्रतिबिंबत्वमायाति मध्योच्चादिविशेषत इति वाराहे इति । १३३. २. पं. १०. कुंभ. सं- ६. श्लोकोऽयं मध्वभाष्ये ३. २, ३६ । ७. वे. सू. ३. ३. ५१. ८. ब्र. म भा. १४०. १. पं.

त्यक्षविषयत्वमातिष्ठमानस्य तव ब्रह्मणोऽपि तद्विषयत्वम् । एवं ब्रह्मणः तद्गुणानाञ्च प्रकाशमानत्वेऽपि त्वयाऽस्य शास्त्रस्य निर्विषयत्वपरिहारायाऽप्रकाशमानत्वमप्यविद्यामहि(१) म्नोपपादनीयम् । उपपादितञ्च तथैव **न्यायसुधायाम्** । यद्यपि जीवचैतन्यं ब्रह्म स्वधर्मप्रकाशनात्मकम्, तथापि परमेश्वराचिन्त्याद्भुतशक्त्युपबृंहिताविद्यावशात् न तथा संसारे प्रकाशयतीति ॥ १४ ॥

एवं परमते सविशेषा(२)भिन्नस्य जीवानन्दस्येवाऽत्यन्तभिन्नस्य ब्रह्मण इव चाऽत्यन्ताभिन्नस्याऽखण्डानन्दस्य प्रकाशमानस्याऽप्यप्रकाशमानत्वमविद्याशक्तिमहिम्नोपपन्नमित्युक्तमर्थं उपसंहरन्नेव तत्र युक्त्यन्तरं दर्शयति—

**इति तव सविशेषानन्दवद्ब्रह्मवच्च**
**स्फुरणयुतमखण्डानन्दमप्याद्रियन्ते ।**
**अनधिगतमविद्याशक्तिभूम्नैव धीराः**
**स हि सकलमनूद्य प्रश्नतोऽपि प्रसिद्धः ॥ १५ ॥**

त्वदुक्तोऽर्थः क इति न जानामि, दूरे जलमिव भासमानं किमिति न जानामि इति शब्दतः प्रत्यक्षतश्चाऽवगतमप्यर्थं साकल्येनाऽनूद्य तत्रैव प्रश्नो ज्ञानानुभवश्च दृश्यते । अतो बाह्यविषयेऽपि प्रकाशमानस्याऽप्रकाशमानत्वं प्रसिद्धमेव । न च त्वदुक्तोऽर्थं इत्यादौ सामान्यतो ज्ञाते विशेषतः प्रश्नो ज्ञानानुभवश्चेति वाच्यम् । सामान्यस्य ज्ञातस्य प्रश्नविषयतायाः अज्ञानावच्छेदकतायाश्चाऽनुपपन्नत्वात् । अज्ञातस्य विशेषस्य प्रश्नविषयतयाऽज्ञानावच्छेदकतया चाऽनुवादायोगात् । न चाऽन्वयव्यतिरेकाभ्यां विशेषप्रश्ने सामान्यमेव तन्त्रम्; विशेषज्ञानानुभवे च सामान्यमेवाऽवच्छेदकमिति वाच्यम् । सामान्यविशेषभावस्य व्याप्यव्यापकभावातिरिक्तस्याऽभावेनाऽज्ञातधूमस्याऽपि ज्ञातवह्निकस्य धूमप्रश्नप्रसङ्गात् । धूमाज्ञानस्य वह्निं न जानामीति वह्न्यवच्छेदेनाऽनुभवप्रसङ्गाच्च । अनुमितिहेतुज्ञानविषयव्याप्तिप्रश्नादिस्थले विशिष्य त्वदभिमतसकलविशेषणविशिष्टं व्याप्त्यादिकमवगच्छत एव प्रश्नार्थं तदप्रकाशस्य त्वयाऽपि वक्तव्यत्वाच्च । अन्यथा प्रष्टुः तदवगमाभावे तस्य प्राक्तनवह्न्याद्यनुमानविलोपप्रसङ्गात् । तदवगमं विनाऽपि तदा तस्याऽनुमित्यङ्गीकारे तत्रैव व्यभिचारेण त्वदभिमतव्याप्तिज्ञानस्याऽनुमित्यकरणत्वप्रसङ्गात् ॥

न च दूरे जलज्ञानमनभ्यासदशादोषात् सन्दिग्धप्रामाण्यमिति तदा हितार्थसंदेहात् प्रश्नो ज्ञानानुभव(३)श्चेति वाच्यम् । अनभ्यासदशापन्नज्ञाने प्रकाशमानस्याऽपि जलस्या-

---

१. महिम्नैवो ग. पु.

२. अभिन्नजीवानन्दस्येति ग० पु०        ३. अनुभवइति ग० पु०

ऽप्रकाशमानत्वानङ्गीकारे प्रामाण्यसंशयस्यैवाऽनवतारप्रसङ्गात् । प्रामाण्यशरीरनिविष्टस्य प्रामाण्यसंशयविषयज्ञानविषयीभूततद्वत्स्वभागातिरिक्तस्य पुरोवर्त्तिविशेष्यकत्वस्य जलत्व-प्रकारकत्वस्य च संशयविपर्ययानास्पदतया प्रामाण्यसंशयस्य तद्वत्वसंशयपर्यवसन्नत्वात् ॥

एवमस्मिन्ज्योतिर्मण्डले "कश्चन्द्र" इत्यादिः चक्षुषा चन्द्रमण्डलादिकं पश्यत एव प्रश्नोऽपि प्रकाशमानस्याऽप्रकाशमानत्वसाधक उदाहर्तव्यः । तत्प्रपञ्चस्त्वन्यत्र कृतोऽनुसन्धेयः ।

इदं त्वत्राऽवशिष्यते—परसिद्धान्ते सत्यमज्ञानमस्ति । पूर्वपक्षे तु कल्पितमेव तदभ्युपगम्यते । कल्पितञ्च न तदप्रकाशोपपादकमिति तदपवरके प्रविशता तदालोके कल्पितस्याऽपि तमसस्तदप्रकाशोपपादकत्वं दृष्टमित्यादि युक्तिभिरस्माभि**स्सिद्धान्त-(१)लेशसङ्ग्रहादिषु** दर्शिताभिर्निरस्तप्रायमिति नेह प्रपञ्च्यते ॥ १५ ॥

एवं निर्गुणस्याऽनधिगततया विचार्यत्वसंभवेऽपि तत्र विचिकित्सा चेत् सगुणब्रह्म-विषयतयैव शास्त्रारम्भस्स्यात् । न च सर्ववेदान्तानामद्वैतिदर्शितन्यायैरखण्डैकपरत्वात्सगुणे ब्रह्मणि मानाभावः । अद्वैतिनां मतेऽध्यारोपापवादन्यायेनाऽद्वितीयब्रह्मप्रति-पादने महातात्पर्येण स्वरसतः प्रवृत्तानामपि वेदान्तानां मध्ये केषाञ्चिद्वाक्यानां सृष्टिवाक्यप्राप्तगुणसहितब्रह्मोपासनाविधिपरस्य ब्रह्मणस्तदुपासनाविषयगुणत्वप्रतिपाद-कत्वस्य चाऽङ्गीकृतत्वादित्यभिप्रेत्याऽऽह—

**यदि त्वेनं सत्यप्यगुणविषयं नाऽनुमनुषे**
**तदा शास्त्रं कामं भवतु सगुणब्रह्मविषयम् ।**
**श्रुतीनां कासाञ्चित्तदपि कथयत्येक(२)विषयं**
**महातात्पर्येण प्रगुणमगुणेऽपि स्थितिजुषाम् ॥ १६ ॥**

इत्थं कृतं पूर्वपक्षदूषणमुपसंहरन्नेव तत्सिद्धान्तस्य दूषणं वक्तुं तस्याऽप्यसारतां प्रतिजानीते—

**तस्मात्तुच्छं प्राचिपक्षे शास्त्रानारम्भवर्णनम् ।**
**तथैव तत्सिद्धान्तेऽपि तदारम्भसमर्थनम् ॥ १७ ॥**

१. तथा जागरे घटादिप्रकाशनक्षम तत्रत्यपुरुषान्तरनिरीक्ष्यमाणालोकवदप-वरके सद्यः प्रविष्टेन पुंसा कल्पितस्य सन्तमसस्य प्रसिद्धसन्तमसोभिन्नार्थक्रिया-कारित्वं दृष्टम् ( **सिद्धान्तलेशसङ्ग्रहः**, ३६२. चौ० सं० ) ।

२. एव० ग० पु० ।

परेण स्वकीयाधिकरणपूर्वपक्षप्रदर्शनव्याजेनाऽद्वैतवाद एव शास्त्रानारम्भदूषणं दर्शितमिति तत्साधारण्याय पूर्वपक्षस्य प्राचिपक्षे इति निर्देशः ॥ १७ ॥

अथ परसिद्धान्तमनूद्य दूषयति—

**अद्वैते यद्यशेषश्रुतिशिखरगिरामैकमत्यं निरास्यं**
**तासां ब्रह्मेति शब्दो गुणगरिमनिमित्तोऽपि नेष्टे गुणत्वात् ।**
**निर्दोषाशेषदीव्यद्गुणजुषि कलयन्सर्ववेदैकमत्यं**
**तद्बद्धत्वादिवाचां त्वमपि खलु तथैवाऽन्यपरं ब्रवीषि ॥१८॥**

सर्वेषां वेदान्तानां सजातीयविजातीयस्वगतभेदरहिते निर्विशेषजीवचैतन्यरूपे ब्रह्मणि तात्पर्यमाश्रित्य कृतस्य पूर्वपक्षस्य निरासाय सर्ववेदान्तप्रतिभटत्वेन विचारविधिवाक्यगतब्रह्मशब्दस्त्वया स्थापितः( १ ) । न चाऽयं गुणपूर्तिनिमित्तः सन्नपि सर्वानपि वेदान्तानुपक्रमादिदृढन्यायनिर्णीताद्वैततात्पर्यात्प्रच्यावयितुं शक्तः । प्रत्युत स्वयमेव तद्गुणभूतत्वात्तदनुगुणमेवाऽद्वैतवाद्यभिमतत्रिविधपरिच्छेदराहित्यरूपमर्थमालम्बते। दर्शितश्चाऽयं न्यायः त्वयाऽपि ( २ )"न स्थानतोऽपी" त्यधिकरणे । तत्र

( ३ )कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।
प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्येन सिध्यतः ॥

इत्यादिश्रुतिवाक्याद्विश्वतैजसप्राज्ञादिरूपस्य भगवतोऽपि बद्धत्वादिदोषोऽस्तीत्याशङ्क्योक्तम**नुव्याख्याने**—

( ४ )"सर्वत्राऽशेषदोषोज्झपूर्णकल्याणचिद्गुणः ।
तद्विरुद्धन्तु यत्तत्र मानं नैव भवेत्क्वचित् ।
महातात्पर्यरोधेन कथं स्यान्मानमत्र त्वि"ति ॥

**न्यायसुधायाञ्चोक्तम्**—(५)सकलश्रुतीतिहासपुराणानां परमेश्वरस्याऽशेदोषविधुरत्वे (६)समस्तगुणपरिपूर्णत्वे च यन्महातात्पर्यं तद्विरोधेन तद्वाक्यमत्र भगवतो दोषित्वादौ कथं मानं भवेत् ?। दृष्टं हि निर्णीतमहावाक्यार्थविरुद्धस्य तदवान्तरवाक्यस्य तत्राऽप्रामाण्यम् । यथा—स्वर्गप्रयोजनाग्निहोत्रपरमहावाक्यार्थविरुद्धस्य "यद्यमुष्मिंल्लोकेऽस्ति वा न वे"त्यादेस्तदवान्तरवाक्यस्य । महावाक्यं हि प्रधानं अनन्यार्थत्वात् । अप्रधानं त्ववान्तरवाक्यं तदर्थप्रतिपत्तिहेतुत्वादिति । तस्मादिहाऽद्वैतवादिदर्शितोपक्रमा-

१. कीर्तित इति ख० पु० । २. ब्र० सू० ३. २. ११. । ३. ब्र० सू० १३१ पु. १. पं० ६ । ४. अनु २०२. १. पं० ८ (कुं० सं०) । ५. न्या. सु. ५०१-१-८ ६. दूरत्वेइति न्यायसुधापाठः ।

दिनयेभ्यः प्रबलतरैः न्यायैः सर्ववेदान्तानां सगुणे ब्रह्मणि महातात्पर्यं प्रसाध्यते चेदेवं कृतपूर्वपक्षनिरासो लभ्यते । न तु ब्रह्मशब्दशक्तिप्रदर्शनमात्रेणेति भावः ॥१८॥

स्यादेतत्—जीवातिरिक्ते ब्रह्मणि प्रमाणं नास्तीति प्रत्यवतिष्ठमानं पूर्वपक्षिणं प्रति तत्र प्रमाणतयोपन्यस्तं ब्रह्मपदं तस्याऽज्ञातस्य ज्ञापकं उत्पत्तिवाक्यस्थानीयमिति तत्प्रतिपादितं गुणपूर्णत्वमुत्पत्तिशिष्टम् । तेन जीवातिरिक्ते ब्रह्मणि सिद्धे वेदान्तेषु सर्वैरपि ब्रह्मप्रकरणैस्तत्रैव वर्तितव्यमिति तत्प्रतिपादितानि निर्गुणत्वजीवाभिन्नत्वादीन्युत्पन्नशिष्टानि । अत उत्पत्तिशिष्टप्राबल्यमर्यादया ब्रह्मपदस्य सर्ववेदान्तेभ्योऽपि प्राबल्यं स्यादित्याशङ्क्याऽऽह—

**नाऽऽशंक्योत्पत्तिशिष्टस्थितिरिह यत इत्यन्यसिद्धानुवादा-**
**त्त्यक्तं चोत्पत्तिवाक्यावगतमपि पशोर्भूरि बाधाद्धविष्ट्वम् ।**
**अस्ति श्रुत्यन्तरानुग्रह इति सुशकं तद्धविष्ट्वेऽपि वक्तुं**
**रूपत्वादीव कुम्भे गुणिनि गुणगतं नाऽपि नाम्नो निमित्तम् ॥ १९ ॥**

स्यादेतदेवं यदि ब्रह्मणो धर्मिणः तद्ब्रह्मेत्यत्रत्यं ब्रह्मपदमज्ञात(१)ज्ञापकं स्यात् । न त्वेवम्, तस्य "यतो वा इमानी"ति यदुपबन्धबलेन जगत्करणतया सहाऽन्यतः प्राप्तस्य धर्मिणोऽनुवादकत्वावगमात् । ततश्च "सदेव(२)सौम्येदमग्र आसीत्" "(३) आत्मा वा इदमेक एवाऽग्र आसीत्" इत्यादिकारणवाक्यमेव तत्प्रापकं वक्तव्यम् । तत्र च सजातीयविजातीयस्वगतभेदनिषेधः स्वरसतः प्रतीयत इति स एवोत्पत्तिशिष्टो न तु गुणपूर्णत्वमिति विपरीतमेव बलाबलम् । अस्तु वा तदेव ब्रह्मपदमज्ञातधर्मिज्ञापकं तथाऽपि नाऽत्रोत्पत्तिशिष्टन्यायावतारः । उत्पत्तिशिष्टमपि हि न भूरि बाधाय प्रभवति । अत एव "(४)पशुमालभेत" इत्युत्पत्तिवाक्ये देवता सम्बन्धेनावगतं पशोर्हविष्ट्वं "पशुं विशास्ति हृदयस्याग्रेऽवद्यती"त्यादि हृदयादि-

१. अज्ञातस्य ग० पु० । २. छा० उ० ६. २. १ । ३. ऐ. उ० २. १. १.

४. अयं भावः—"यो दीक्षितो यदग्नीषोमीयं पशुमालभेत" इति पशुयागविधायकं वाक्यम् । तत्राऽग्नीषोमीयपदं "साऽस्य देवता" इत्यधिकारविहितदेवतातद्धितान्तम् । तेन च देवताविशिष्टं द्रव्यमभिधीयते । तच्च द्रव्यं पशुपदसान्निध्यात् पशुरूपम् । एवं च साक्षात्पशोरेव देवतासंबन्धश्रवणात् "आग्नेयमष्टाकपालं (पुरोडाशं) निर्वपेत्" इत्यादौ पुरोडाशादेरेव हविष्ट्वमिवेहाऽपि साक्षात्पशोरेव हविष्ट्वमुचितम् । तथाऽपि विशसनहृदयाद्यवदानादेः विधानात् साक्षादेव हविष्ट्वे विशसनाद्यसंभवेन

हविष्ट्वगमकानेकवाक्यविरोधात् त्यक्तम् । इह (१)बृहन्तोऽस्मिन्गुणा इति श्रुत्यन्तरसहायकमप्यस्तीति चेत्, किं ततः ? पशोर्हविष्ट्वेऽपि "जुष्टं (२)देवानामिदमस्तु हव्यं" इति (३)तदुपाकरणमन्त्रसहायकमस्ति । तथाऽपि बह्ववदानवाक्यविरोधात् तद्धविष्ट्वं त्यक्तं चेत्पूर्णगुणत्वमप्यनेकाद्वैतवाक्यविरोधात् किमिति न त्यक्तव्यम् ।

एतेन ब्रह्मपदस्य श्रुतिरूपतया निर्गुणत्वादिप्रतिपादकवाक्येभ्यः प्राबल्यमित्याशङ्का (४)निरस्ता । प्रथमोपस्थितिप्रयुक्तबलाद्बहुत्वप्रयुक्तबलस्यैवाऽधिकत्वात् । (५)"विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वमिति" न्यायात् । अयुक्तं च गुणबृहत्त्वस्य (६)गुणिनि शब्दप्रवृत्तौ निमित्तत्वम् । अन्यथा रूपत्वगन्धत्वादीनि निमित्तीकृत्य कुम्भेऽपि रूपरसगन्धादिशब्दप्रवृत्तिप्रसङ्गात् । तस्मादद्वैतविषयमहावाक्यार्थविरोधादद्वैतस्यैवोत्पत्तिशिष्टत्वेन तदवरोधाद्बहुवाक्यविरोधाद्गुणगतधर्मस्य गुणिनि शब्दप्रवृत्तिनिमित्तत्वायोगाच्च ब्रह्मशब्दो न गुणबृहत्वनिमित्तः, किन्तु परब्रह्मण्यद्वैत्यभिमतत्रिविधपरिच्छेदराहित्यनिमित्त एव । "बृहन्तो ह्यस्मिन्गुणा" इति श्रुतिरस्ति चेत् सा व्यावहारिकगुणविशिष्टसगुणब्रह्मणि कथंचित् स्तुतिपरतया नेतव्या । अद्वैतिभिः "(७)स्याच्चैकस्य ब्रह्मशब्दवत्" इति सूत्रे ब्रह्मशब्दस्य निर्गुण इव सगुणेऽपि वृत्तेरङ्गीकृतत्वादिति भावः ।

(८)एतेन "(९)अथाऽतो ब्रह्मजिज्ञासे"ति सूत्रस्याऽऽदावस्त्योङ्कारो(१०)ब्रह्मवाचकः सूत्रावयवः । स चाऽवतेर्धातोरुत्पन्न ओतत्ववाची सन्योग्यतया गुणौघतत्वपर इति तेनाऽपि ब्रह्मणो गुणपूर्तिसिद्धेस्तस्य जीवाद्वैलक्षण्यमित्यपि कल्पना गलहस्तिता ॥१९॥

एवं ब्रह्मशब्दस्य गुणपूर्तिवाचकत्वमेव नाऽस्तीति ब्रह्मणो जीवाभेदाविरोध उपपादितः । इदानीं तद्वाचकत्वमङ्गीकृत्याऽपि तदविरोधमुपपादयति—

बहुतरतद्विधिवैयर्थ्यापत्या तत्परित्यज्य हृदयादिद्वारैव पशोः हविष्ट्वं न तु साक्षादिति निर्णीतं पूर्वतन्त्रे दशमाध्याये । तदत्राऽभिसंहितम् ।

१. बृहन्तो ह्यस्मिन् इति ग० पु० ।

२. "इमं पशुं पशुपते ते अद्य वद्ध्नाम्यग्नये सुकृतस्य मध्ये । अनुमन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यम्" (तै. सं. ३. १. ४) इति समग्रो मन्त्रः ।

३. उपाकरणं नाम पशोर्देवतायै निर्देशनम् ।

४. निराकृतेति. ग० पु० । ५. जै. पू. मी. सू. १२. २. २२ ।

६. गुणिशब्दप्रवृत्तिनिमित्तत्वम् । ग० पु० । ७. वे. सू. २. ३. ५ ।

८. अनेन ग० पु० । ९. वे. सू. १. १. १ । १०. "सर्वत्राऽनुगतत्वेन पृथगोंक्रियतेऽखिलैः । ओतत्ववाची ह्योङ्कारः वक्त्यसौ तद्गुणौततताम् । स एव ब्रह्मशब्दार्थो नारायणपदोदितः । **इत्यनुव्याख्याने** पृ० १६ १. २. ८ ।

किं चैशो गुणगरिमा न जीववर्गे
भूमाख्यस्त्वदभिमतो विरुद्ध एषः ।
यत्तस्मिन्नपि घटते सदा सतोऽस्य
स्वानन्दप्रभृतिवदावृतेरभानम् ॥ २० ॥

ईश्वरस्य गुणबृहत्वं नाम त्वन्मते तद्गुणानामानन्दादीनां भूमा निरतिशयत्वरूप उत्कर्ष इति "(१)भूम्नः (२)क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति" (३)ब्रह्मदृष्टिरुत्कर्षादि"ति त्वदीयाधिकरणयोः(४) स्पष्टम् । जीवब्रह्माभेदसजीववर्गेऽपि स्यादिति तथैवाऽनुभवोऽपि भवेत्तथा च तस्याऽल्पगुणत्वेनाऽनुभवो न स्यादिति हि (५)तस्य विरुद्धत्वमुच्यते । नाऽयमस्ति विरोधः । जीवानां मुक्तिसमयभोग्यानन्दज्ञानबलाद्युत्कर्षमङ्गीकृत्य त्वया तस्य संसारे किंचित्प्रकाशमानस्याऽपि सर्वात्मना प्रकाशे मुक्तिसंसारयोरविशेषः स्यादिति तत्परिहारार्थमविद्यावरणस्योपपादितत्वेन तत एव तस्मिन्परमेश्वरगुणपूर्तिसत्वेऽपि तदननुभवस्याऽल्पगुणत्वानुभवस्य च समर्थितप्रायत्वात् स्वकीयमुक्तिभोग्यानन्दाद्युत्कर्ष एव परमेश्वरे गुणभूमेति वक्तुं शक्यत्वाच्च । अविद्या-

१. वे. सू. ३. ३. ५९ ।

२. **अत्र मध्वभाष्यम्**—सर्वगुणेषु भूमगुणस्य ज्यायस्त्वं क्रतुवत्सर्वत्र सहभावात् । दीक्षाप्रायणीयोदयनीयसवनत्रयावभृथात्मकः क्रतुः "भूमैव देवः परमो ह्युपास्यो नैवा भूमाफलमेषां विधत्ते । तस्माद्भूमा गुणतो वै विशिष्टो यथाक्रतुः कर्ममध्ये विशिष्ट" इति गौपवनश्रुतिः । इति १४१. १. ८

**अत्र तत्वप्रकाशिका**—सर्वैरुपास्यो भूमगुणः सर्वगुणेषु तस्य ज्यायस्त्वात् । कस्मात् । यथा खलु दीक्षाप्रायणीयोदयनीयसवनत्रयावभृथात्मकस्यक्रतोः सर्वयागेष्वनुवर्तन एव साफल्यात् । अन्यथा वैफल्यात् ज्यायस्त्वं । ततश्च सर्वैः कर्तव्यम् । तथा भूमत्वस्य सर्वत्राऽऽनन्दादिषु सहभावेन उपासन एवेष्टफलसिद्धेः इति । त. प्र. १८३. १. पं. ८. कुं. सं. ।

३. वे० सू० ४. १. ५ ।

४. **मध्वभाष्यम्**—"ब्रह्मदृष्टिश्च सर्वथा कार्यैव परमेश्वरे । उत्कृष्टत्वात् । ब्रह्मदृष्ट्या सदोपास्यो विष्णुस्सर्वैरपि ध्रुवम् । महत्ववाची शब्दोऽयं महत्वज्ञानमेव हि । सर्वतः प्रीतिजनकं अतस्तत्सर्वथा भवेत् । आत्मेत्येव यदोपासा तदा ब्रह्मत्वसंयुता । कार्यैव सर्वथा विष्णोः ब्रह्मत्वं न परित्यजेत् । इति **ब्रह्मतर्के** इति १४९. १. पं. २. कुं. सं. ।

५. तस्येति ग० पु० नास्ति ।

वरणनिवृत्तिरूपमुक्त्यनन्तरमपि हि केषाञ्चित्परमेश्वरापरोक्षज्ञानानन्तरसंभूतसत्कर्मानुष्ठानविकर्मानुष्ठानदोषेण परमेश्वरेच्छावशात्स्वरूपानन्दस्य किञ्चिदनभिव्यक्तिमङ्गीकुरुषे । "(१)स्तुतयेऽनुमितिर्वे"ति त्वदीयाधिकरणे तथा निरूपितत्वात् (२) । परमेश्वरस्य चाऽऽनन्दादिभूम्नो निरतिशयस्वरूपस्याऽपि अतीतक्षणान्त्यवन्न्यूनाधिकभाववदसंख्यनानाविशेषशालिनः कश्चिद्विशेष एव मुक्तान्प्रति यथाऽधिकारं भासते इति विशेषान्तराणां पुरुषभेदेनाऽभिव्यक्तिमङ्गीकुरुषे । "(३)नानाशब्दादिभेदादि"ति त्वदीयाधिकरणे तथा (४)निरूपितत्वात् । पारमेश्वरस्याऽऽनन्दादिभूम्नो जीवेऽपि सत्त्वे तस्य संसारदशायां विद्यमानेनाऽविद्यावरणेनाऽप्रकाशे काऽनुपपत्तिरिति भावः ॥ २० ॥

एवं गुणपूर्णत्वस्य जीवेऽपि संभवेनाऽविरोध उपपादितः । इदानीं तस्य विरुद्धत्वेऽपि न परमते जीवभेदकसाधकमित्याह—

**अपि च भगवानेकोऽनेकस्तनुस्तनुमानपि**
**स्वयमवयवो नाऽस्त्यैश्वर्याद्विरोध इतीदृशम् ।**
**विषमगुणसाङ्कर्यं वयं तवाऽभ्युपगच्छतः**
**कथमितरवद्भेदस्सिध्येद्विरुद्धगुणान्वयात् ॥ २१ ॥**

इत्थं हि तव मतम्—ईश्वरस्स्वयमेकस्सन्नपि (५)आनन्दमयाधिकरणोदाहृतान-

---

१. वे. सू. ३. ४. १४ ।

२. **अत्र मध्वभाष्यम्**—ब्रह्मतर्के च—येषां ज्ञानं समुत्पन्नं तेषां मोक्षो विनिश्चितः । शुभकर्मभिराधिक्यं विपरीतैर्विपर्ययः । स्वेच्छानुवृत्त्यैव भवेत् ब्रह्मणः प्रायशस्तथा । देवानामपि सर्वेषां विशेषादुत्तरोत्तरम् । यस्य ज्ञानं तस्य मोक्षः इति नाऽत्र विचारणा । तस्य शान्त्यादयोऽङ्गानि तस्मात्तेषामनुष्ठितिः । अवश्यकरणीया स्यादन्यथाऽल्पफलं भवेत् । इत्याग्नेये । ज्ञानान्मोक्षो भवत्येव सर्वकार्यकृतोऽपि तु । आनन्दो ह्रसतेऽकार्याच्छुभं कृत्वा तु वर्धत इति ब्रह्माण्डे इति ( १४४. २. १., १४५. १. ९. ) ३. वे. सू. ३. ३. ६० ।

४. **अत्र मध्वभाष्यम्**—शब्दोऽनुमा तथैवाऽक्षः योग्यताभेदतस्सदा । ब्रह्मादीनामेकमर्थं बहुधा दर्शयन्ति हि । अतः पूर्णत्वमीशस्य नानैवैषां प्रदृश्यते । अतः फलस्य नानात्वं नानैवोपासना यतः । इति ब्रह्मतर्के । अतो भूमत्वमपि नानैवोपास्येति । १४१. १. पं. ११ । अत्र **तत्वप्रकाशिका**—भूमत्वमुपासने अधिकारिणां नानाप्रकारेणैव प्रतीयते । शब्दादिभिः प्रमाणैः तत्प्रतीतेरेष्टव्यत्वात् । शब्दादीनां च प्रमाणानां अधिकारिभेदेनाऽनेकधैकैकार्थप्रतीतिजनकत्वान्नानोपासनाच्च फलतारतम्यमुपपद्यत इति भावः । ( त. प्र. १८३. २. पं. ४ ) । ५. वे. १. १. ६ ।

मयप्राणमयादिरूपेण, (१)गुहाधिकरणोदाहृतशुभकर्मफलभोक्त्रन्तरात्मरूपेण, (२)"न संख्योपसंग्रहादि"त्यधिकरणोदाहृतपञ्चपञ्चजनरूपेण, (३)"न स्थानतोऽपी" त्यधिकरणोदाहृतविश्वतैजसप्राज्ञरूपेण चाऽनेकः। तथा शरीरी सन्नपि (४)"अरूपवदेव हि तत्प्रधानत्वादि"त्यधिकरणोक्तरीत्या परव्यूहावतारादिनानाशरीरिरूपः। एवमानन्दमयोऽवयवी सन्नपि तदीयशिरःपक्षमध्यपुच्छावयवरूपः। सर्वं चैतदचिन्त्याद्भुतशक्तेः परमेश्वरस्यैश्वर्यवशान्न विरुध्यते।

(५)अङ्गाङ्गित्वेन भगवान्क्रीडते परमेश्वरः।
ऐश्वर्यान्न विरोधश्च चिन्त्यस्तस्मिञ्जनार्दनः॥
अतर्क्ये हि कुतस्तर्कस्त्वप्रमेये कुतः प्रमेति बृहत्संहितायाम्।

इत्यादि वचनादिति। एवं सर्वत्र विरुद्धधर्मसाङ्कर्यमेव भगवदैश्वर्यातिशयप्रयुक्ततया बहुमन्यमानस्य तव मते सकलगुणपरिपूर्णस्यैव ब्रह्मणोऽल्पजीवगुणभावोऽपि संभवतीति न ब्रह्मशब्देन जीववैलक्षण्यं सिध्यति। विरुद्धधर्मेण भेदसाधनं खलु विरुद्धधर्मसङ्करमन्यत्र परिहरतः शोभते। सर्वत्र विरुद्धधर्मसंकरमेव श्रेयांसमभिमन्यमानस्य तव कथं तदुपपद्यतामिति भावः॥ २१॥

नन्वीश्वरः स्वकीयाचिन्त्याद्भुतशक्तिमात्रेण स्वस्मिन्नेकत्वानेकत्वादिविरुद्धधर्मसमावेशं घटयतीति मया नेष्यते; किन्तु भेदप्रतिनिधिं विशेषमपेक्ष्य तं घटयतीति। न च जीवेश्वरयोर्मया विशेष इष्यते; येन भेदाभावेऽपि तत एव तस्य स्वविरुद्धधर्मशालिजीवभावः स्यादित्याशङ्क्याऽऽह—

**विशेषं वैकुण्ठे यदि वदसि भेदप्रतिनिधिं**
**तदेकानेकत्वप्रभृतिगुणसंवासघटकम्।**
**सजीवब्रह्मत्वव्यतिकरविरोधं च शमयेत्**
**समं खल्वत्राऽपि श्रुतिशिरसि भेदापवदनम्॥ २२॥**

परमेश्वरे "नेह नानास्ति किं चने"त्यादि स्वगतभेदनिषेधश्रुतिबलादेव हि तस्मिन्नेकत्वादिविरुद्धधर्मसमावेशाय त्वं विशेषमङ्गीकृत्य स्वयमेकोऽपि परमेश्वरो विशेषबलादनेक इत्यादि कल्पयसि। तथा जीवब्रह्मभेदनिषेधश्रुतिबलात्तयोः विरुद्धधर्मसमावेशाय भेदस्थाने विशेषमङ्गीकृत्य परमेश्वर एव विशेषवशाद्विविधजीवभावेन संसरतीति किमिति त्वया न कल्पनीयम्? न हीश्वरे स्वगतभेदनिषेधश्रुतेर्जीवेश्वरभेदनिषेधश्रुतेश्च कश्चिद्विशेषस्त्वयोपपादयितुं शक्यत इति भावः॥ २२॥

---

१. वे. सू. १. २. ११। २. वे. सू. १. ४. १२। ३. वे. सू. ३. २. ११. अधि. ८। ४. वे. सू. ३. २. १४। ५. वे. सू. भा. ८८. २. ४.।

एवं ब्रह्मणः सविशेषगुणपूर्तिमत्वाङ्गीकारेऽपि तदीयशक्तिमहिम्ना विशेषबलेन च तस्यैवाऽल्पगुणजीवभावस्संभवतीत्युक्तम् । इदानीं सर्वविधविरुद्धधर्मसङ्घटने ब्रह्मणश्शक्तिरेव पर्याप्तेति विशेषाङ्गीकारो व्यर्थ इत्याह—

**वक्तव्यं ते विरुद्धं घटयति भगवच्छक्तिरेवेत्यवश्यं**
**नो चेत्कृत्स्नप्रसक्तिर्निरवयवरवक्षोभणं वा कथं स्यात् ? ।**
**एकोऽनेकस्थितश्चेत्यणुरखिलजगद्व्यापकश्चेति वा ते**
**तत्र व्यर्थो विशेषः क्वचन तव तया सर्वनिर्वाहसिद्धेः ॥२३॥**

पारमेश्वरी शक्तिरेव (१)विरुद्धधर्मसङ्घटनीत्यवश्यं त्वयैष्टव्यम् । अन्यथा जीवस्य स्वतन्त्रकर्तृत्वे कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा स्यादिति त्वदुक्तदूषणमदूषणं स्यात् । तथा हि—

जीवस्य स्वतन्त्रकर्तृत्वनिरासार्थं "(२)इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्ति"-रित्यधिकरणम् । तत्र "(३)कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वे"ति गुणसूत्रं जीवस्य स्वतन्त्रकर्तृत्वनिरासे हेत्वन्तरपरमिति तव (४)मतम् । तत्र "न जीवात्कारणं पर"मिति श्रौतव्यपदेशाज्जीवः स्वतन्त्रकर्तेति पूर्वपक्षे स्वतन्त्रकर्तृत्वे तस्य हिताकरणमहितकरणञ्च न स्यात् । दृश्यते च तस्य हिताहिते विविंचतोऽपि तदुभयमास्तिककामुकादेरिति दूषणमुक्त्वा कृत्स्नप्रसक्तिसूत्रेण यदि जीवः स्वतन्त्रकर्ता स्यात् तदा तस्य सिद्धान्ते तत्स्वरूपातिरिक्तकार्यानुसारितारतम्यवत्क्तिरूपगुणानङ्गीकारात् स्वयमेव प्रवृत्तिशक्तिरूपस्य तस्य तृणादानादिष्वपि कृत्स्नशक्त्या प्रवृत्तिः प्रसज्येतेत्यनुभवविरोधः ।

---

१. सर्वविरुद्ध इति ग० पु० । २. वे. सू. २. १. २२. अ. ७. । ३. वे. सू. २. १. २७. अ. २ ।

४. **अत्र मध्वभाष्यम् ।** अयं च दोषो जीवकर्तृत्वपक्षे । एकेनाऽङ्गुलिमात्रेण प्रवर्तमानोऽपि पूर्णप्रवृत्तिस्स्यात् । न च तद्युज्यते । सामर्थ्यैकदेशदर्शनात् । न चैकदेशेन, निरवयवत्वात् । ( भा० १०८. २. पं० ९ ) **अत्र तत्वप्रकाशिका-** न केवलं हिताक्रियादिदोषो जीवस्य स्वतः कर्तृत्वे । किन्त्वयं वक्ष्यमाणश्च । तथाहि—किं जीवस्सर्वकार्येषु सर्वसामर्थ्येन प्रवर्तते ? अंशेन वा ? नाद्यः । एकेनाऽङ्गुलिमात्रेण तृणादानादावपि पूर्णशक्त्या प्रवृत्तिप्रसक्तेः । न च स्यादेवमिति वाच्यम् अनुभवविरोधात् । न द्वितीयः । अंशाभावात् । न चांऽशित्वमङ्गीकर्तुं शक्यम् । अथेति निरवयवत्वश्रुतिव्याकोपादिति । ( त० प्र० ९०. १. पं० ३ ) ।

न चैकदेशेन प्रवृत्तिः, तस्य निरंशत्वात् । अन्यथा निरवयवत्वशब्दव्याकोपः । न च "(१)व्यतिरेको गन्धवदि"(२)त्यधिकरणे जीवस्य सांशतया व्यवस्थापयिष्यमाणत्वादंशानां बहुत्वेनांऽशविशेषैः कार्यानुसारिणा तारतम्येन तस्य कर्तृत्वोपपत्तिः । बहुत्वस्य भेदव्याप्तत्वेन भेदस्याऽपि प्रसक्त्या भिन्नांशराहित्यरूपनिरवयवत्वशब्दव्याकोपतादवस्थ्यात् । न च विशेषबलेन बहुत्वोपपत्तिः । भेदेनोपपादनीयस्यांऽशांशिबहुत्वस्य चेतने विशेषेणोपपादने घटादावचेतनेऽपि तस्य तेनैवोपपादनप्रसङ्गादिति दूषणान्तरं प्रदर्श्य, तस्मादचिन्त्यशक्तिः परमेश्वर एव परस्परं विरुद्धमप्यभेदं अंशांशित्वकृतं बहुत्वं च चेतनेषु विशेषेणैव निमित्तेन समावेश्याऽभेदेन निरवयवत्वशब्दकोपं बहुत्वेन कृत्स्नप्रसक्तिं च निराकृत्य कार्यानुरूपं जीवेन कारयतीत्यङ्गीकर्तव्यमिति तदुपसंहृतम् ।

अत्र परमेश्वरशक्तिमनपेक्ष्य विशेषेणैवाऽभेदबहुत्वयोः विरुद्धयोस्समावेशसमर्थने "कृत्स्नप्रसक्त्यादि" सूत्रोक्तं दूषणं न (३)लगेदिति स्फुटमेव । तदपेक्षायां तु सैव तव पर्याप्ता किमजागलस्तनायमानविशेषकल्पनया ? किमपि साधनान्तरमनपेक्ष्य सर्वमपि कर्तुमकर्तुमन्यथा कर्तुमपि शक्तः परमेश्वर इति हि तव मतम् ।

तस्य शक्तिः कथं भेदापेक्षं बहुत्वं अभेदेऽपि विशेषमपेक्ष्य संपादयति न तु तमनपेक्ष्येति नियन्तुं शक्यते ? यदि हि तस्य जगत्सृष्टौ प्रकृत्याद्यपेक्षावदभेद

१. वे. सू. २. ३. १७ अ. १३ ।

२. अत्र **मध्वभाष्यम्**—यथा पुष्पाद्गन्धः पृथग्गच्छति एवमंशिनो जीवादंशाः पृथग्गच्छन्ति । अत एक एव सन् गन्धवद्व्यतिरिच्यते । अथैकी भवति । अथ बह्वीभवति । तं यथा यथेश्वरः कुरुते तथा तथा भवति "सोऽचिन्त्यः परमो गरीयान्" इति शाण्डिल्यश्रुतिः । "अचिन्त्य एषः शक्त्यैव ह्येकोऽवयववर्जितः । आत्मानं बहुधा कृत्वा क्रीडते परमेश्वरः" । इति पाद्मे । इति ( म. भा० ११८. १. पं० ११ ) । अत्र **तत्वप्रकाशिका**—अस्त्येव जीवस्य बहुरूपत्वम् । अणुत्वेऽप्यंशव्यतिरेकेण बहुत्वोपपत्तेः । न चांऽशिनं विहायाऽन्यत्रांऽशस्य गमनमनुपपन्नम्, गन्धादौ दृष्टत्वात् । न च श्रुतिविरोधः । तस्याः स्वरूपैक्यविषयत्वात् । न चाऽभिन्नांशशून्यत्वादनुपपत्तिः । योगसंपदा तदुपपत्तेः । न चेश्वरेण साम्यापातः, योगिनामपि बहुरूपत्वशक्तेः योगाराधितेश्वरप्रसादायत्तत्वात् । न चेश्वरस्याऽप्येतदशक्यत्वम् । तस्याऽचिन्त्यशक्तित्वात् । कुत एतत्सर्वमिति चेत् "अथे"ति श्रुतेरिति भावः इति । ( त० प्र० ११८. १. पं० ५ ) ।

३. "लभ्येत" ग० पु० ।

बहुत्वसमावेशसंपादने विशेषापेक्षा श्रुत्यादिप्रमाणसिद्धा स्यात् तदा स्वयमेव गन्तुं शक्तस्याऽपि दण्डावलंबनवद्विशेषापेक्षाऽपि लीलामात्रेणेति तव कल्पना प्रसरेत् । न चैवम्; विशेषस्य विरुद्धसमावेशकल्प्यत्वात्तस्य चाऽऽवश्यकपरमेश्वरशक्त्यैवोपपन्नत्वात् ॥

अपि चैक एव विष्णुरनेकत्र सर्वेषां दक्षिणाक्षिस्थाने जाग्रदवस्थाप्रेरकेण सप्ताङ्गैकोनविंशतिमुख इत्याद्युक्तलक्षणेन विश्वाभिधानेन रूपेण प्रतिस्थानं समग्रेणैव स्थितः । यथा नानादेशस्थितानशेषपुरुषान् प्रति सतताभिमुखेन समग्रेण रूपेण तरणिस्तदूर्ध्वदेशे स्थितः न तु बहुकुंभसंभृताम्भोवत्तत्तदक्षिस्थाने स्थितः स्वरूपतश्शरीरतो वा भिन्नः । नाऽपि बहुतृणाग्रप्रसारितपटवत्तत्तदधिकरणेष्वेकदेशेन स्थित इति त्वया (१) "न स्थानतोऽपि पटस्योभयलिङ्गं सर्वत्र ही" त्यधिकरणे (२) स्थापितम् ।

तथाऽणुरेव विष्णुरखिलजगद्व्यापकश्च सूक्ष्मतया दृश्यमान एव कृष्णस्य मुखे गर्भीकृतब्रह्माण्डत्वस्य यशोदया दृष्टस्यैकेन दाम्ना बन्धनादनुभवाच्च सूक्ष्म एव तदुदरे बहूनामपि दाम्नां बन्धुमपर्याप्तत्वस्य तद्दृष्टस्य महत्वलिङ्गस्य सत्वादिति च (३)"अक्षरमंबरान्तरधृते" रित्यधिकरणे "अस्थूलमनण्वि"ति श्रुतिवाक्यमणुत्वस्थूलत्वपरं व्यवस्थाप्य त्वया (४) निरूपितम् । (५) दहराधिकरणे च दहराकाशान्तस्थस्य परिच्छिन्नस्यैव ब्रह्मांशस्य "यावान्वा अयमाकाशस्तावानि"ति श्रुत्यर्थतया (६)बहिर्ब्रह्माकाशवद्व्याप्तत्वं त्वयाऽङ्गीकृतम् ।

तत्रैव परिच्छिन्नस्य व्याप्तत्वासंभवमाशङ्क्याऽन्यत्राप्येवम् "आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वे"त्यणीयस्त्वेन श्रुतस्यैवाऽन्तर्हृदयस्थ-

१. वे. सू. ३, २. ११. । २. अत्र **मध्वभाष्यम्**—स्थानापेक्षया हि परमात्मनो न भिन्नं रूपम् । सर्वेषु भूतेष्वेकमेव ब्रह्मेत्याचक्षत इति श्रुतिः । एकरूपः परो विष्णुः सर्वत्राऽपि न संशयः । ऐश्वर्याद्रूपमेकञ्च सूर्यवद्बहुधेयते इति मात्स्ये । प्रतिदृशमिव नैकधार्कमेकं समधिगतोऽस्मि विधूतभेदमोह इति भागवते इति । ( मा० १३१. १. पं० ३ ) ३. वे. सू. १. ३. १०. अधि० ३. ।

४. **तत्वप्रकाशिका**—हृत्पद्मगताकाशस्थमन्वेष्टव्यमिति सामान्येनोक्ते किं तदत्र विद्यत इति प्रश्ने यावान् बहिः परमात्मा आकाशाख्यस्तिष्ठति तावान् हृदयपद्माकाशे विद्यते । न च ब्रह्मपुरपदप्रयोगादात्मा न विष्णुः ब्रह्मैव पूर्णत्वात् पुरमित्युपपत्तेः । न चाऽऽकाशपक्षेऽन्वयोऽस्ति । दहराकाशस्थमुपास्यमित्युक्ते किं तदत्र विद्यत इति प्रश्ने यावान्वेत्यस्यान्वयादर्शनात् । न हि दहराकाशस्थो व्याप्ताकाशः अन्वेष्टव्य इत्युपपद्यते । तदभावादयोगाच्चेति । त० प्र० ४९. १. पं० २. ।

५. १. ३. ५. । ६. ब्रह्मांशवदिति पाठान्तरम् ।

तस्य ब्रह्मांशस्य "एष आत्मा अन्तर्हृदये ज्यायान्पृथिव्याः ज्यायानन्तरिक्षात् ज्यायान् दिवः ज्यायानेभ्यो लोकेभ्यः।" इति सर्वतो ज्यायस्त्वश्रवणात् तद्वदिहाऽप्युपपद्यते इत्युपपादितम्।

अत्र सर्वत्राऽपि केवलं परमेश्वरस्य शक्त्यैवैकत्वप्रत्येकपर्याप्तानेकवृत्तित्वयोः अणुत्वमहत्वयोश्च विरुद्धयोः समावेश उपपादनीयः। न विशेषस्योपयोगोऽस्ति। विशेषोऽहि तव भेदप्रतिनिधिरेकस्यैवाऽनेकत्वमापाद्य धर्मावसाङ्कर्येण निर्वाहयेत्। न चाऽत्र द्विविधेऽपि विरुद्धधर्मसमावेशोदाहरणेऽनेकत्वापादनमस्ति। अत एवं तादृशो-दाहरणे त्वयाऽपि केवलं परमेश्वरशक्तिरेव नियामकत्वेनाऽऽश्रिता। उक्तञ्च "ऐश्वर्या-द्रूपमेकञ्च सूर्यवद्बहुधेयत" इत्यादि। एवञ्च सत्यन्यत्रापि विरुद्धधर्मसमावेशसंघटने विशेषो व्यर्थः। ईश्वरः स्वयमेकस्सन्ननेकस्तनुमानवयवोऽवयवी चेत्यादेः सर्व-विधस्याऽपि विरुद्धधर्मसमावेशस्याऽवश्यवक्तव्यतया तदीयशक्त्यैव निर्वाहोपपत्ते-रिति भावः॥ २३॥

इतश्च परमेश्वरशक्त्यैव एकत्वानेकत्वादिविरुद्धधर्मसमावेशः संघटनीयो न विशेषेणेत्याह—

**किञ्चाऽयं भेदसाध्यं कमपि घटयितुं कल्प्यते न त्वयाऽर्थं**
**किन्तु व्याहारमात्रं क्वचन कथमितः स्याद्विरुद्धार्थयोगः।**
**सम्बन्धस्स्याद्गुणानां गुणिभिरितरथा गोचरस्तत्प्रतीते-**
**र्न स्याद्भेदः पटादिष्वपि च घटयता सत्सु तन्तुष्वसत्त्वम्॥ २४॥**

अयं विशेषस्त्वया भेदसाध्यं कंचिदप्यर्थं घटयितुं न कल्प्यते। किन्तु यत्र भेदा-भावेऽपि भेदाधीनो व्यवहारो दृश्यते यथा—"लोके नीलं सुगन्धि महदुत्पलमि" त्यादौ, वेदे "सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दो ब्रह्मे" त्यादौ च नीलगन्धादीनां ज्ञा-नानन्दादीनाञ्च धर्मिणः परस्परस्माच्च भेदाभावेऽपि अपर्यायशब्दैरुक्तिरित्यादिस्तन्मा-त्रनिर्वोढृतया (१) कल्प्यते। भेदाभावेऽपि भेदस्थाने स्वयमवभासमानस्सन्नपर्यायशब्द-प्रयोगादिकं निर्वर्तयतीति नैकत्वानेकत्वादिविरुद्धधर्मसमावेशरूपार्थनिर्वाहाय। यदि व्यव-हारस्येव भेदाधीनस्याऽर्थस्याऽपि निर्वाहकोऽयमङ्गीक्रियेत तदा गुणगुणिनां घटस्य नीलवर्णः, ब्रह्मण आनन्द इत्यादि धर्मधर्मिभावव्यवहारमूलप्रतीतिगोचरस्सम्बन्धोऽपि तद्विरोधिनि सत्यप्यभेदे विशेषबलात्कल्प्येत। सत्सु तन्तुषु पटाद्यसत्वनिर्वाहाय भेदश्च न कल्प्येत। तन्तूनामवयवानां पटाद्यवयविनाञ्चाऽभेदेऽपि विशेषबलादेव सत्वासत्व-विरुद्धधर्मसमावेशोपपत्तेः। न चोभयत्रापीष्टापत्तिः।

---

१. तन्मात्रनिर्वोढृत्वेन० ग० पु० तन्मात्रं निर्वोढुं त्वयेति ख० पु०।

(१)अस्मत्पक्षे गुणाद्याश्च तद्वन्तो हि विशेषतः ।
अनन्यत्वान्नाऽनवस्था भेदो नाशो भवेत्तथा ॥

इत्य**नुव्याख्यान**विरोधात्। अत्र हि "तद्वन्तो हि विशेषतः" इत्यस्य व्याख्यानसमये (२)"भेदसम्बन्धकार्यकरो हि विशेष" इति **न्यायसुधायां** तदभिप्रायो वर्णितः। तेन यथा विशेषो भेदस्य प्रतिनिधिरिति शुक्लः पट इत्यादिप्रतीतौ भासमानो भेदाधीनं सामानाधिकरण्यव्यवहारं निर्वर्त्तयति तथा संबन्धस्याऽपि प्रतिनिधिरिति स एव पटः शुक्लगुणवानित्यादिप्रतीतौ भासमानस्तद्वत्वव्यवहारमपि निर्वर्त्तयतीति गुणगुण्यादिषु संबन्धानङ्गीकारस्स्पष्टीकृतः । अत एव समवायनिराकरणस्थलेऽपि गुणगुण्यादीनां संबन्धो नास्तीति व्यवस्थापितम् । स्वाभिमतं संबन्धान्तरमस्तीति तु नोक्तम् । ब्रह्मतद्धर्मीणामभेदे धर्मधर्मिभावो(३) न युक्त इत्याशङ्कापरिहारार्थं (४)"उभयव्यपदेशात्त्वहिकुण्डलवदि"ति त्वदीयाधिकरणे(५) च तदाशङ्कापरिहाराय सिद्धान्ते विशेष एव समर्थितः न तु तदधीनः कश्चन संबन्धः ।

नन्वाश्रयाश्रयिभाव एव धर्मधर्मिभावात्मा गुणगुण्यादीनां सम्बन्धः किमिति न स्यात् ? न च तस्याऽद्विष्ठत्वात् संबन्धत्वानुपपत्तिः । संयोगस्याऽपि मन्मते द्विष्ठत्वाभावादिति चेत् न—

त्वन्मते ययोरभेदस्तयोर्धर्मधर्मित्वव्यवहारे सत्यपि वस्तुत आश्रयाश्रयित्वानङ्गीकारात् । अत (६)एवाऽयं पटः एतत्तन्तुसंबद्धः एतदाश्रितत्वादेतदाश्रिततृणवदिति समवायसाधकानुमाने तन्तुपटयोराश्रयाश्रयिभावासिद्धेरिति **न्यायसुधायां**(७) स्वरूपासिद्धिरुक्ता ।

एवं तावद्गुणगुण्यादीनां विशेषाधीनसंबन्धान्तरसिद्धिप्रसङ्गोऽनिष्ट इति स्थितम् ।

१. अनुव्याख्या १८६. १. ७.

२. न्या० सु० ३६३-२, ७.

३. भेदः ग० पु० ४. वे. सू. ३. २. २८. अधि० १५.

५. **तत्वप्रकाशिका**—"यथा कुण्डलात्मकस्याप्यहेः विशेषादेव कुण्डलित्वं एवमानन्दाद्यात्मकस्यापि ब्रह्मणः विशेषादेवाऽऽनन्दित्वादिकं युज्यत" इति त० प्र० १५८. २. पं० १० ।

६. अयं पटः एतत्तन्तुसंबद्धः एतदाश्रितत्वात्, एतदाश्रिततृणवदित्यप्यसत् । तन्तुपटयोराश्रयाश्रयिभावासिद्धेः । ( तत्व० प्र० ३५८. १. ४. ) ।

७. विशेषेण विचारितोऽयं न्यायसुधायां "समवायाभ्युपगमाच्च साम्यादनवस्थितेः" इति ( वे० सू० २. २. ६. ) सूत्रे । ( न्या० सु० ३५४ पृष्ठे ) ।

तथा तन्तुपटादीनां भेदासिद्धिप्रसङ्गोऽप्यनिष्ट एव। 'भेदो नाशे भवत्तथ' इत्युदाहृतश्लोकशेषे सत्सु तन्तुषु विनश्यतां पटादीनामभेदवद्भेदस्यापि अङ्गीकृतत्वात्। **न्यायसुधायां** च तद्व्याख्यानानन्तरं "स्यादेतत्। यथा भेदसाधकानां व्यपदेशभेदादीनां विशेषाश्रयेणैवाऽन्यथासिद्धिरुक्ता; तथा सत्यपि तस्मिन्नसत्त्वस्याऽपि विशेषेणैव निर्वाहः क्रियताम्। किं भेदाभ्युपगमेन? मैवम्, विशेषस्य भेदकार्यव्यवहारमात्रनिर्वाहकत्वेनाऽसत्त्वं प्रत्यनिर्वाहकत्वात्। सकलभेदकार्यकारित्वे विशेषो भेद एव न तत्प्रतिनिधिः स्यादि"ति शङ्कापरिहाराभ्यामुक्तार्थस्य स्थिरीकरणाच्च। तस्माद्विशेषस्याऽविरुद्धधर्मसङ्घटकताया अपि परमेश्वरशक्त्यायत्तत्वस्य विशेषाभावस्थलेऽपि परमेश्वरशक्त्यैव विरुद्धधर्मसंघटनस्य च त्वयाऽङ्गीकृतत्वात्। वस्तुतो विशेषस्य भेदसंबन्धकार्यव्यवहारमात्रनिर्वर्तकताया एव त्वयोक्तत्वाच्च भेदाभावस्थलेषु एकत्वानेकत्वादिपरमेश्वरशक्त्यैव संपादनीयमिति व्यर्थः क्वाचित्कविशेषाङ्गीकारः। अपर्यायशब्दप्रयोगादरपि परमेश्वरशक्तिकृतानेकत्वेनैवोपपत्तेः। अतो जीवेश्वरयोर्निर्विशेषाभेदेऽपि बह्वल्पगुणत्वरूपविरुद्धधर्मसमावेशः संघटत इति न गुणपूर्णत्वेन जीवादीश्वरस्य भेदसिद्धिरितिभावः ॥ २४ ॥

नन्वैश्वर्यबलादनन्यसाध्यं विरुद्धधर्मसङ्करं संपाद्य क्रीडन्नपि परमेश्वरो विविधदुःखादिकलुषितं जीवभावं नाऽनुमन्यत इत्याशङ्कामुद्भाव्य परिहरति—

**ऐश्वर्याज्जीवभावं कथमिव स भजेद्दुःखभीत्यादिदूष्यं**
**मैवं दुःखादयस्ते करणगुणतया न स्पृशन्त्येव जीवम्।**
**स्वामित्वेन स्पृशन्तीत्यपि न तव मते तत्परस्यैव हीष्टं**
**तस्मात्तस्याऽखिलान्तःकरणगणपतेर्जीवतैवाऽर्थनीया ॥ २५ ॥**

भवेदेवं यदि जीवभावस्त्वन्मते दुःखादिकलुषितस्स्यात्। न त्वेवम्। त्वया दुःखादीनामन्तःकरणपरिणामत्वेनाऽङ्गीकृतत्वात्।

ननु मन्मते अन्तःकरणपरिणामा एव दुःखभयादय इति सत्यम्। न तु ज्ञानेच्छाकृतिवदन्तःकरणवृत्त्यात्मधर्मरूपेण तद्द्वैविध्यमस्ति। मुक्तियोग्यजीवेषु मुक्तौ तदनुवृत्त्यभावात्। तथाऽपि दुःखादिमत्त्वं नाम दुःखादिस्वामित्वं, न तु तदाश्रयत्वम्। "इच्छास्वामित्वमेवोक्तमिच्छावत्त्वं न चापरम्" इति सांख्याधिकरणाऽनुव्याख्याने(१)

१. अनु० व्या० १८३-१. ८. "किंचित्तद्वशगत्वेऽपि स्वामित्वं लोकवद्भवेत्। सर्वात्मतन्त्रकामादेः किमुतैव परेशितुः" इत्युत्तरग्रन्थः। अत्र सुधा-क्षेत्रोपादानकानामपि सस्यानां कृषीवल एव स्वामी न क्षेत्रम्। तथैवेति। एतदुक्तं भवति—जीवेश्वरौ द्वावपि शरीरमधितिष्ठतः। तत्रेश्वरोऽन्तःकरणं स्पष्टं दृष्ट्वा तत्र ज्ञानेच्छाप्रयत्नरूपा

ऽन्तःकरणवृत्तिरूपे छायामुक्तस्य न्यायस्य दुःखादिष्वपि तुल्यत्वात्। स्वामी च तेषामन्तःकरणोपादानानामपि जीव एव; क्षेत्रे फलितानां धान्यानामिव क्षेत्रपतिः। अत एव क्षेत्रपते 'रहं धान्यवा'नित्यनुभववज्जीवस्याऽहं दुःखी, बिभेमि, द्वेष्मीत्यनुभव इति चेत् ?।

उच्यते—यदि जीवस्य हेयतया प्रसिद्धं दुःखादिमत्वन्नाम दुःखादिस्वामित्वं हन्त तर्हि तत्परमेश्वरस्यैव स्यान्न जीवस्य। परमेश्वर एव दुःखादिपरिणामिनोऽन्तःकरणस्य तदन्यस्य चेन्द्रियवर्गस्य स्वामी नाऽन्य इति हि त्वयेष्यते । त्वया (१)"ज्योतिराद्यधिष्ठानं तु तदाम्नानादि"त्यत्राऽधिकरणे "ब्रह्मणो वा एतानि करणानि चक्षुः श्रोत्रं मनो वागि"त्यादिकाषायणश्रुतिवचनात् सर्वान्तर्यामित्वाच्च परमेश्वर एव करणानां स्वामी। स तु स्वकीयैः करणैरनादिकालमारभ्य दर्शनादिकार्याणि जीवैः कारयतीति जीवकरणत्वव्यवहारस्तथाभिमानश्च स्वामिनः कुठारैः तत्प्रेरितेषु भृत्येषु छिन्दत्सु तत्तद्भृत्यकुठारत्वव्यवहारदर्शनात्परकीयेऽपि बहुकालसंबन्धिनि तदीयतोपचारदर्शनात्तथाऽभिमानदर्शनाच्चेति व्यवस्थापितत्वात् । (२)"स्वामिनः फलश्रुतेरित्यात्रेय:" इत्यधिकरणे मनुष्यादीनां स्वस्वेन्द्रियजन्यज्ञानकर्मस्वामित्वमुररीकृत्यैव सिद्धान्तप्रदर्शनाच्च।

एवं हि त्वदीयं तदधिकरणम् "ब्रह्मविदाप्नोति परमि"त्यादिश्रुत्युक्तज्ञानफलं ज्योतिष्टोमादिधर्मफलं चेन्द्रियप्रेरकाणां देवानामेव भवति ? उत कर्तृभूतानां मनुष्यादीनामपीति संशये—देवानामेवेति तावत्प्राप्तम्। भगवदुपासनापुण्यफलमिन्द्रियप्रेरकदेवतापदं प्राप्तानां तेषां भगवत्प्रसादलब्धतत्तदिन्द्रियजन्यज्ञानकर्मस्वामित्ववत्त्वाल्लोके

वृत्तीः स्वेच्छाज्ञानप्रयत्नैरुत्पाद्य बाह्यकरणानि चाऽधिष्ठाय घटाद्युत्पादयति। जीवस्तु तद्दत्तस्वाम्योऽवतिष्ठते तस्मादीश्वरस्यैव मुख्यं स्वाम्यं कर्तृत्वं च। जीवस्याऽमुख्यमेवेति च। (न्या० सु० ३२७. १.९.) १. वे. सू. १. ४. १५. **मध्वभाष्यम्**—मध्वभाष्यम् । "यज्ज्योतिराद्यधिष्ठानं ब्रह्म तदेवैतैः करणैः प्रवर्तयति यः प्राणे तिष्ठन्निति तदामननात्। जीवेनैव स्वकरणैः कारयति परमात्मा। अतो न विरोधः।" "एष ह्यनेनाऽऽत्मना चक्षुषा दर्शयति श्रवणेन श्रावयति मनसा मनयति बुध्या बोधयति तस्मादेतावाहुस्त्वतिरस्तितिरिति भाल्लवेयश्रुतेः। करणैः कारणं ब्रह्म पुरुषापेक्षयाऽखिलम्। श्रोत्रादिभिः कारयति करणानीत्यतो विदुः। न जीवापेक्षया मुख्यं कारयेत्परमेश्वरः । केवलात्मेच्छया तस्मान्मुख्यत्वं तस्य निश्चितं"इति वाराहे इति। ( म. भा. १२४. १. ८. ) २. वे. सू. ३. ४. ४४. अ ७. म० भा० १४६-२-१०.

च स्वामिन एव फलदर्शनात्कर्तुरप्यस्वामिनः कर्मकरादेः क्षेत्रादिफलादर्शनात् । "यदु किं चेमाः प्रजाः शुभमाचरन्ति देवा एव तदाचरन्ति यदु किं चेमाः प्रजा विजानते देवा एव तद्विजानते देवानां ह्येतद्भवति तेषां तत्तत्स्वामी हि फलमश्नुते । नाऽस्वामी कर्म कुर्वाण" इति माध्यन्दिनायनश्रुतेश्च । ततश्चैकैकेन्द्रियस्य बहवो देवा स्वामिन इति तेषां तत्तत्स्वातन्त्र्यविज्ञानादितारतम्यानुसारेण फलतारतम्यं भवति । लोकेऽपि हि यस्याऽधिकं क्षेत्रस्वातन्त्र्यं यस्य चाऽऽवापादिकर्मणि ज्ञानप्रयत्नाधिक्यं तस्य तत्फलमधिकं दृश्यत इति प्राप्ते राद्धान्तः—अयजमानानामप्यृत्विजां सत्रयागफलमिवाऽस्वामिनामपि कर्तॄणां कर्मज्ञानफलमुपपद्यते ।

ननु सत्रेष्वस्वामिनामपि ऋत्विजामगृहीतदक्षिणत्वेन कर्तृत्वात्भाव्यं फलेनेति चेत्तर्हि प्रजार्थमेव देवैः ज्ञानकर्मणोः क्रियमाणत्वात्तासामपि भाव्यं फलेन ।

ननु यदि ज्ञानादिकं प्रजार्थं देवैः सम्पाद्यते तर्हि कृत्स्नं फलं प्रजानामेव स्यान्न किञ्चिद्देवानामिति चेत्, न; यथा राज्ञां प्रजार्थमेव क्रियमाणस्याऽपि पालनस्य फलं (१)प्रजापते राज्ञ एव मुख्यं, प्रजानां तु तत्सहकारिमात्रत्वादल्पम् । यथा गुरुणा शिष्यार्थमेव क्रियमाणस्याऽपि व्याख्यानस्य फलं गुरोरेव मुख्यं, शिष्याणां (२)चाऽल्पं तथैव ज्ञानादिदानप्रवृत्तैः देवैः प्रजार्थमेव क्रियमाणस्याऽपि ज्ञानादेः फलं देवानामेव मुख्यं, प्रजानामल्पमित्युचितत्वात् । अल्पफलत्वादेव प्रजानामफलत्वश्रुतिः । अल्पधने निर्धनत्वव्यवहारदर्शनादिति ।

अत्राऽधिकरणे(३) यद्यपि सप्तान्नविद्योपासनाप्रीतभगवद्दत्तमिन्द्रियतत्फलेष्ववान्तरस्वामित्वमिन्द्रियप्रेरकाणां देवानामङ्गीकृतम्, तथाऽपि लोके तत्तदिन्द्रियतत्तत्फलस्वामित्वेनाऽभिमतानां मनुष्यादीनां तत्र नाऽस्ति स्वामित्वमिति स्पष्टमेव व्यवहृतम् । पूर्वपक्षे बहूनां देवानां स्वामित्वे तारतम्यानुसारेण फलतारतम्यमुक्त्वाऽपि कर्तुः फलप्रतिषेधात् । सिद्धान्ते पूर्वपक्ष्यभिमतं कर्तुस्सर्वथैवाऽस्वामित्वमङ्गीकृत्यैव राजगुरुस्वामिकपालनव्याख्यानास्वामिनामपि प्रजाशिष्याणामिव ज्ञानकर्मास्वामिनामपि मनुष्यादीनां किञ्चित्फलमिति तेषां फलोपपादनाच्च ।

१. प्रजावत इति पा० । २. स्वल्पं इति ग० पु० ।

३. **अनुव्याख्याने**—"पुण्यमेवामुमाप्नोति न देवान्पापमाप्नुयात् । इत्यादिश्रुतयो मानं उक्तेऽर्थे युक्तयोऽपराः ।" २२३. २. १. । अत्र **सुधा**—"अनेन पुण्यमेवामुं गच्छति । न ह वै देवान्पापं गच्छति" इति श्रुतिमुपादत्ते । अमुं सप्तान्नविद्योपासनेन प्रेरकतया परपुरप्रवेशकृतं पुण्यमेवाप्नोति न पापम् । कुतः । देवो ह्यसौ जातः । न हि देवान्पापं प्राप्नोतीति भावः । न्या० सु० ६१०. १. ११.

यद्यपि सत्रेषु यजमाना एवर्त्विजः "ये यजमानास्त ऋत्विज"इति तत्र यजमानानां ऋत्विक्कार्ये विधानात् तथापि स्वमते ते यजमाना न भवन्ति इत्यभिमानेन वा, तथैव मीमांसकमर्यादेत्यभिमानेन वा तथोक्तम् । दृश्यते हि त्वद्भाष्यानुव्याख्यानतत्वप्रकाशिकान्यायसुधासु मीमांसकमर्यादोल्लङ्घनेन व्यवहारः, तन्मतमित्यन्यथानुवादश्च । तथाहि—"(१) द्वादशाहवदुभयविधं बादरायण" इति सूत्रे (२) भाष्यम् "द्वादशाहः क्रत्वात्मकस्सत्रात्मकश्च भवति" इति । (३) "प्रदानवदेव तदुक्तमि"ति सूत्रे (४) श्रवणगुरुप्रदानयोः प्रधानेतिकर्तव्यतारूपयोः गुरुप्रदानं प्रबलमित्युपपादनार्थे **तत्वप्रकाशिका** न चेतिकर्तव्यतात्वेन दौर्बल्यम्, (५) यज्ञियहिंसायां इतिकर्तव्यताया एव प्राबल्यदर्शनादिति । "भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयतती"ति सूत्रे

(६)"भूमैव देवः परमो ह्युपास्यो नैवाऽभूमा फलमेषां विधत्ते ।
तस्माद्भूमा गुणतो वै विशिष्टो यथा क्रतुः कर्ममध्ये विशिष्टः" ॥

इति भाष्योदाहृतश्रुत्यभिप्रायकथनार्थे **तत्वप्रकाशिका**—यथा खलु दीक्षाप्रायणीयोदयनीयसवनत्रयावभृथात्मकस्य क्रतोः सर्वयागेष्वनुवर्तनं एवं साकल्यादन्यथा वैकल्याज्ज्यायस्त्वम् । ततश्च सर्वैः कर्तव्यत्वं तथा भूमत्वस्याऽपि सर्वत्राऽऽनन्दादिषु सहभावेनोपासन एवेष्टसिद्धेरिति ।

जिज्ञासासूत्रे च प्रथममसंहिततयोंकारनिर्देशं सूत्रावयवभूतमङ्गीकृत्याऽसंहिताप्रयोजनं उत्तरसूत्रेष्वनुगतिसूचनमिति व्युत्पादनार्थं **न्यायसुधा**—सर्वाणि हि सूत्राणि प्रत्येकमनेकवेदवाक्यविचारपरत्वादवान्तरब्रह्मविद्याः, स्रवन्त्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यत इति श्रौतार्थवादसामर्थ्यात् सर्वास्वपि ब्रह्मविद्यासु आद्यन्तयोरोंकारस्योहः कर्तव्य इति गम्यते । न चोह्यमानं वाक्यात्पृथगिति शक्यते वक्तुम् । मन्त्रेष्वप्यूह्यमानस्य मन्त्रानवयवत्वप्रसङ्गादिति ।

१. वे० सू० ४. ४. १२. २. "यथा द्वादशाहः क्रत्वात्मकः सत्रात्मकश्च भवति एवं भुक्तभोगो बाह्यशरीरकृतः चिन्मात्रकृतश्च भवतीति बादरायणो मन्यते ।" इति मध्वभाष्यम् । १६६. २. ५. । ३. वे० सू० ३. ३. ४४ ।

४. "न च श्रवणादिमात्रेण ब्रह्मदृष्टिर्भवति । किन्तु सेतिकर्तव्यत्वेन । यथा गुरुदत्तं तथैव भवति ।" आचार्यवान्पुरुषो वेद इति ह्युक्तम् इति० म० भा० १३९. १. ९. । ५. यागीयेति मुद्रिततत्वप्रकाशिकापाठः ।

६. विवृतमिदं २० तमश्लोकटिप्पण्याम् ।

आनन्दाधिकरणे च **न्यायसुधा**—ज्योतिषां स्तोमो हि ज्योतिष्टोम(१) इति। अत्र सर्वत्र प्रसिद्धमीमांसानुरोधी व्यवहारो न भवतीति तद्विदां सुविदितमेव। अहीन-सत्ररूपेण ह्युभयविधो न तु क्रतुसत्ररूपेण(२)। क्रतुत्वस्योभयसाधारणत्वात्। यज्ञियहिंसायां इतिकर्तव्यताप्राबल्यं दृष्टमित्यत्यन्तमेव निरालम्बनम्। दीक्षणीयादि-सकलाङ्गसहितः क्रतुः सर्वयागेष्वनुवर्तत इत्यपूर्वो व्यवहारः। दीक्षणीयादिज्योतिष्टो-मेति(३)कर्तव्यताकलाप एव हि तद्विकृतिभूतेषु विश्वजिदादिष्वतिदिश्यते न ज्योतिष्टोमक्रतुरपि। न वा सर्वयागेषु। न चेतिकर्तव्यताकलापः क्रतुरिति व्यवह्रियते। न च ज्योतिष्टोमेतिकर्तव्यताकलापस्य तद्विकृतिष्वतिदेशेन किमपि ज्यायस्त्वं, ऐष्टिकादीतिकर्तव्यताकलापस्याऽपि तत्तद्विकृतिष्वतिदेशेन साम्यात्।

न चाऽनतिदेश्यात् स्वप्रधानाज्ज्यायस्त्वं विवक्षितम्, विरोधात्। न ह्यमात्या-नपि सेवमानो भटवर्गस्तानसेवमानाद्राज्ञो भवति ज्यायान्। नापि अर्थलोपादिनाऽ-नतिदेश्यादङ्गान्तरात् ज्यायस्त्वम्। दीक्षणीयादेरपि त्रैधातव्याप्रत्याम्नानादिनाऽश्वमेधा-दिष्वनतिदेशात्(४)।

१. किं च ज्योतिरादिसर्वशब्दवाच्यत्वं परमात्मनो योगेनैव वाच्यम्। न च योगोऽपि संभवति। ज्योतिषां स्तोम इत्यादिरूपा हि ज्योतिष्टोमादिशब्दव्युत्पत्तिः। कथमसौ स्तोमानामन्यपरत्वानभ्युपगमे संभवेत्। इति (त० प्र० ६९. २. १०)।

२. "सत्रमहीनश्च द्वादशाहः तस्योभयथा प्रवृत्तिरैककर्म्यात्। ( जै० सू० ८. २. २४ )। "एवं द्वादशाहोऽहर्गणानां" इत्यापस्तम्बपरिभाषासूत्रे कपर्दिभाष्यम्— "द्वादश अहानि यागाः यस्य सः द्वादशाहः। स उभयात्मकः अहीनात्मकः सत्रा-त्मकश्चेति।" ( आ० प० सू० खं० ४. सू० ४ )। एवं च क्रतुत्वं इष्टिपशुसोमात्मक-सर्वयागसाधारणम्। "दर्शपूर्णमासानां यज्ञक्रतोः" "पशुबन्धस्य यज्ञक्रतोः" इतीष्टि-पश्वादिष्वपि क्रतुशब्दप्रयोगात्। किन्तु सत्रत्वमहीनत्वमेव च विभाजको धर्मः। न तु क्रतुत्वं सत्रत्वमिति याज्ञिकमीमांसकादिमर्यादा सर्वशिष्टादृता च।

३. ज्योतिष्टोम इति सोमरसनिष्पाद्यस्य प्रधानयागस्यैव संज्ञा। तत्र दीक्ष-णीयाप्रायणीयातिथ्योपसदग्नीषोमीयसवनीयानुबन्ध्योदयनीयावभृथादयः अङ्गरूपा यागाः। तेषामेव च ज्योतिष्टोमविकृतिष्वतिदेशः। न च प्रधानस्य ज्योतिष्टोमस्येति।

४. **अयं भावः**—न ह्यतिदेशाभावमात्रं प्रधानत्वप्रयोजकम्। विकृतौ प्रयो-जनाभावेनाऽनतिदिश्यमानानां अङ्गानां प्राधान्यप्रसङ्गात्। यथाहि "प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः" इत्यत्र कृष्णलानां सुवर्णखण्डरूपत्वेन वैतुष्यस्याऽसंपाद-

न चोङ्कारस्योत्तरसूत्रेष्वनुगतिरूहः(१)। देवस्य त्वेत्यादिमन्त्रेषु सूर्यादिशब्दोहे अग्न्यादिशब्दादेरिव कस्यचित्स्थानिनः शब्दस्याऽभावात् ।

न च ज्योतिषां स्तोमो ज्योतिष्टोम इति नामनिर्वचनम्। किं तर्हि "त्रिवृत्पञ्च-दशस्सप्तदश एकविंश एतानि वाव तानि ज्योतींषि य एतस्य स्तोमाः" इति वाक्यशेषदर्शितज्योतिर्नामकाः स्तोमाः यस्येति तन्निर्वचनं (२)**मीमांसकाभिमतम्।**

न चैवमुदाहृतेषु अन्यथालिखितस्थलेषु क्रत्वादिशब्दानामहीनादिलक्षकत्वेन प्रसिद्धमीमांसानुसारित्वसमर्थनं युक्तम् । तच्छास्त्रानुरोधिनां क्वाचित्के खल्वन्यथाभावे प्रतीयमाने तथा समर्थनं क्रियते। इह तु त्वद्भाष्यटीकाकाराभ्यां यावन्मीमांसा-गन्धि लिखितं तत्सर्वमप्यन्यथाभूतमिति कथं तथा समर्थनं क्रियेत ?।

एवं तावन्मीमांसकमर्यादोल्लङ्घनेन व्यवहार उदाहृतः। तन्मतमित्यन्यथा-ऽनुवादो यथा—

"(३)अङ्गीकृतत्वादपि तैः पदार्थानां (४)पृथक् पृथक्।
क्रियापदेनाऽन्वयस्य वाक्यभेदो हि दूषणम् ॥" इति ।

सत्यज्ञानादिवाक्येषु ब्रह्मानुवादेन सत्यत्वाद्यनेकविधाने वाक्यभेदः स्यादिति शङ्कां—

नीयत्वाद्वितुषीभावसंपादकस्याऽवघातस्य नाऽतिदेशः, न तावता तस्य प्राधान्यम् । एवमश्वमेधे "त्रैधातवीया दीक्षणीया भवति" इति वाक्येन दीक्षणीयास्थाने त्रैधा-तवीया नाम काचिदिष्टिर्विहिता। सा च दीक्षणीयाप्रत्याम्नानादश्वमेधे दीक्षणीयातिदेशं निरुणद्धि। अतो नाऽश्वमेधे दीक्षणीयाया अतिदेशः। नैतावताऽश्वमेधापेक्षया दीक्षणीयायाः प्राधान्यमिति ॥

१. ऊहो नाम प्राकृते मन्त्रे विकृतावतिदेशेन प्राप्ते सति तस्य वैकृतदेवताप्रकाश-नार्थं प्राकृतदेवतापदं परित्यज्य वैकृतदेवताबोधकं पदं प्रक्षिप्यते। अतश्च प्राकृतदेवता-पदस्थाने वैकृतदेवतापदप्रक्षेपः ऊहः। यथा—"देवस्य त्वा सवितुः प्रसवेऽश्विनो-र्बाहुभ्यां पूष्णो हस्ताभ्याममग्नये जुष्टं निर्वपामि" इति प्रकृतौ अग्निपदघटितो हविर्नि-र्वापमन्त्रः। तस्य सौर्ययागे अतिदेशेन प्राप्तौ सत्यां तत्रत्यसूर्यदेवताप्रकाशनार्थं प्राकृतमग्निपदं परित्यज्य सूर्यपदप्रक्षेपः क्रियते—सूर्याय जुष्टमिति। न चाऽनुवृत्तेरूहत्वं क्वचिदपि शास्त्रेषु सिद्धमिति भावः।

२. एतच्च पूर्वमीमांसायां चतुर्थाध्यायचतुर्थपादान्तिमाधिकरणे स्थापितम् ।

३. अनु० १६३. २. ५ । ४. पदानां त्विति मुद्रितानुव्याख्यानपाठः ।

"(१)पृथगेव च वाक्यत्वं पृथगन्वयतो भवेत् ।
अवान्तरत्वाद्वाक्यानां वाक्यभेदो न दूषणम् ॥"

इत्यभ्युपगमेन परिहृत्य मीमांसकमतेऽपि इदं समानमित्यनेन श्लोकेनोच्यत इति (२)**न्यायसुधायां** व्याख्यातम्—तैर्मीमांसकैरपि "अरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाती"त्यादावरुणादिपदानां क्रियापदेन पृथक्पृथगन्वयस्य स्वीकृतत्वात्तेषामपि हि वाक्यभेददूषणं प्रसज्येत । तत्रैतावदेव वक्तव्यं महावाक्य एव दूषणं नाऽवान्तरवाक्यभेद इति । तदस्माकमपि समानमि"ति । न प्रसिद्धमीमांसकमते तत्राऽवान्तरवाक्यभेदोऽस्ति । क्रयभावनायाः विधेयत्वेन "(३)अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः" इत्युक्तरीत्याऽऽरुण्यादिविशिष्टक्रयभावनारूपक्रियैक्येन पदैकवाक्यताया एव तैस्स्वीकृतत्वात् । एवमन्यत्राऽपि द्रष्टव्यम् । विस्तरभयादुपरम्यते । एवञ्च सत्रर्त्विग्दृष्टान्तकरणात् कर्तॄणामपि ज्ञानकर्मस्वामित्वमनुमतमिति न भ्रमितव्यम् ।

स्यादेतत्—यदि जीवस्य दुःखादिस्वामित्वं न स्यात्तदा तस्य दुःखाद्याश्रयत्वस्याऽप्यभावादहं दुःखीत्यादिप्रत्ययानामध्यासात्मकत्वमङ्गीकर्तव्यं स्यात् । न चैतदङ्गीकर्तुं युक्तम्—

"मिथ्यात्वमपि बन्धस्य न प्रत्यक्षविरोधतः ।
मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याऽप्रतो भवेत् ॥
मिथ्यायास्साधकत्वं च न सिद्धं प्रतिवादिनः ॥"

इत्याद्य**नुव्याख्याने** बन्धमिथ्यात्वस्य प्रत्यक्षविरोधेन यदि श्रुतिवाक्याद्बन्धस्य मिथ्यात्वं तदा तस्याऽपि वाक्यस्य तत एव मिथ्यात्वं भवेत् । वाक्यस्य सर्वमिथ्यात्वबोधकत्वात् । ततश्च तस्य मिथ्यात्वसाधकत्वं न स्यात् । मिथ्याभूतस्य साधकतायाः प्रतिवाद्यसम्मतत्वादिति युक्त्या च निराकृतत्वात्, **अनुव्याख्यान** एव सुखादिग्राहकस्य साक्षिणो निर्दोषत्वादिना याथार्थ्यनियमस्य प्रतिपादितत्वाच्च । अस्मिन्नपि ग्रन्थे पूर्वपक्षनिराकरणोपयोगितया तस्याऽर्थस्य "साक्षी जीवे सुखादीन्य-

१. अनुव्या० १६३. २. ४ । २. किं च परेणाऽप्येतदङ्गीकृतमित्याह—अङ्गीकृतत्वादिति । अरुणया एकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणातीत्यादौ तैर्मीमांसकैरपि पदानामरुणयेत्यादीनां क्रीणातीति क्रियापदेनैकैकस्याऽन्वयोऽङ्गीकृतः । अनुवादविधानयोः युगपद्विरोधभयादरुणादीनां गवादिभिस्स्वाकाङ्क्षावशात्पार्ष्णिकान्वयोऽभ्युपगतः । ततश्च तेषामपि वाक्यभेदो दूषणं प्रसज्येत । तत्रैतावदेव वक्तव्यम्—महावाक्यभेद एव दोषो नाऽवान्तरवाक्यभेद इति । तदस्माकमपि समानमिति (न्यायसु० ७५. १. ९)। ३. तन्त्रवा० २. २. ३. पृ० ४८५ ।

निशमनुभवन्सर्वमानाधिकस्त" इत्यनूदितत्वाच्च । तस्मादहं दुःखीत्याद्यनुभवनिर्वाहाय जीवस्य दुःखादिस्वामित्वमस्तीत्येव मन्मतम् । किन्तु तत्स्वामित्वमीश्वरदत्तमपकृष्ट-मित्येव विशेषः । अत एव सांख्याधिकरणा**नुव्याख्याने—**

(१)द्वैविध्येपि तु कामादेः कुतः स्वामित्वमात्मनः ।
साक्षादनुभवारूढं शक्यतेऽपोदितुं क्वचित् ॥

इति कामादिस्वामित्वस्याऽप्रत्याख्येयत्वमुक्त्वा तदनन्तरश्लोके तस्याऽपकृष्टत्वम-प्युक्तम् । **न्यायसुधायां** चाऽत्यन्तावश्यत्वरहितगवादिस्वामित्वदृष्टान्तेन तस्याऽपकर्ष-स्समर्थितः(२)। तस्मादीश्वरस्यैव दुःखादिस्वामित्वं न जीवस्येत्युक्तमयुक्तमिति चेत्,

उच्यते—त्वन्मतेऽपि दुःखित्वाद्यनुभवोऽध्यासरूप एव । उक्तं ह्यानन्दमयाऽ-धिकरणे **त्वद्भाष्ये—**

(३)प्रमादात्मकत्वाद्बन्धस्य विमुक्तत्वं च युज्यते ।
मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिरिति भागवत इति ।

**तत्वप्रकाशिकायां** च "विमुक्तश्च विमुच्यत" इति संसारिणोऽपि विमुक्तत्व-श्रवणात्तदन्यथाऽनुपपत्त्या तस्य परब्रह्मत्वसिद्धेः तद्विरोधो (४)भेदव्यपदेशस्येति शङ्का-निराकरणार्थत्वेनोदाहृतं भाष्यग्रन्थमवतार्य तस्याऽर्थो वर्णितः—जीवस्य परब्रह्मत्वा-भावेऽपि विमुक्तत्वोक्तिर्युज्यते बन्धस्याऽज्ञानमूलत्वेनाऽस्वाभाविकत्वादिति ।

**यत्त्वनुव्याख्याने** बन्धस्याऽध्यासात्मकत्वनिरसनं तस्याऽभिप्रायस्तु तद्व्या-ख्यानानन्तर**न्यायसुधायां—**अत्र तत्वविदो वदन्ति—सर्वोऽपि हि बन्धो बुद्धीन्द्रियशरीरविषयतद्धर्मलक्षणोऽस्माभिरप्यात्मन्यारोपित एवेत्यङ्गीक्रियते । यथोक्तं भाष्यकृता—प्रमादात्मकत्वाद्बन्धस्येति । अतः किन्निबन्धनो बन्धमिथ्यात्वनिरासनि-र्बन्ध इत्याशङ्कां कृत्वा, सत्यम्; तथाप्यस्त्यत्र दर्शनभेद इति तत्परिहारमारभ्य बुद्धीन्द्रियशरीरविषयाः स्वरूपतस्सन्त एवेश्वरपरवशा अप्यविद्यादिवशादात्मीयतयाऽ-ध्यस्यन्ते । तांश्चाऽऽत्मनो विविक्तानपि विस्पष्टं तथाऽनुलभमानस्तद्धर्मान् दुःखा-दीन् सत्यानेवाऽऽत्मत्वेन पश्यंस्तत्कृते नीचोच्चत्वलक्षणे विकृती सत्ये एव प्रति-पाद्यत इत्यादिवाक्यैः स्वमतस्थितिप्रतिपादनेन मायावादिनस्तु दुःखादिकं स्वरू-

१. अनु० १८३-१. ७. इच्छास्वामित्वमेवोक्तं इच्छावत्वं न चाऽपरम् । किंचि-त्तद्वशगत्वेऽपि स्वामित्वं लोकवद्भवेत् । इत्यनन्तरश्लोकः ।

२. न्यायसुधा—यथाऽत्यन्तमवशायामपि गवि किञ्चिद्वशत्वमात्रेण देवदत्तस्वामि-त्वं लोके दृष्टं तथैव (न्या० सु० ३२७. १. ५)। ३. मध्वभाष्ये. ( ८९. १. ५ )।

४. भेदाभिधानस्येति 'मुद्रिततत्वप्रकाशिका पाठः' ( त. प्र. २०-२-१३ )

पेणाऽपि मिथ्येति मन्यन्ते । अतस्तन्निराकरणनिर्बन्धो युक्त एवेत्येतत्परिभावयितुं बन्धमिथ्यात्वमिति सम्मुग्धे प्रस्तुते दुःखादेरिति निष्कृष्योक्तमित्यद्वैतिमते निराकार्यांश-निष्कर्षेण च स्पष्टीकृतः ।

यत्तु साक्षिणो याथार्थ्यनियमान्न साक्षिरूपस्य दुःखित्वाद्यनुभवस्याऽध्यासत्वं संभवतीति, तदयुक्तम् । ईश्वरपरतन्त्रस्य जीवस्य स्वातन्त्र्यग्रहणे प्रमाणाप्रमाणज्ञानयोरप्यप्रामाण्यप्रामाण्यग्रहे च तस्य याथार्थ्यपरित्यागात् । यदि तु मानसे दर्शने दोषाः स्युर्न वै साक्षिदर्शन इति 'यत्किञ्चिद्व्यभिचारिस्याद्दर्शनं मानसं हि तदि'ति चाऽ**नुव्याख्यान**दर्शनात्स्वातन्त्र्यादिग्रहणं मनोवृत्तिरूपं न तु साक्ष्यनुभवरूपमितीष्यते तदा दुःखित्वाद्यनुभवोऽपि त्वत्सिद्धान्तसिद्धाध्यासत्वनिर्वाहाय मनोवृत्तिरूप एव त्वयेष्टव्यः स्यात् । यदि चैवं सति दुःखित्वाद्यंशोऽपि मनोवृत्तिविषयतयैव स्यात् दुःखित्वाद्यनुभवव्यतिरेकेण दुःखादिमात्रविषयानुभवाभावात् । ततश्च दुःखादेस्साक्षिविषयत्वं स्वाभिमतं न सिध्येदित्यनुशयस्तदा दुःखित्वाद्यनुभवरूपसाक्षिण आत्मीयत्वांशेऽध्यासरूपत्वमकामेनाऽपि त्वयेष्टव्यम् । त्वयाऽपि हि सर्वेषां साक्ष्यनुभवस्य याथार्थ्यनियमो नेष्यते, असुराणां साक्षिणो यथार्थत्वाभावस्य मनुष्याणां साक्षिणो मिश्रत्वस्य चाऽङ्गीकृतत्वात् । तस्मात्त्वन्मते दुःखादीनामन्तःकरणपरिणामतया जीवस्य दुःखाद्याश्रयत्वाभावेन (१)"ज्योतिराद्यधिष्ठानं तु तदामननात्" (२)"स्वामिनः फलश्रुतेरित्यात्रेय" इत्यधिकरणयोस्तस्येन्द्रियतत्फलस्वामित्वस्य प्रतिषिद्धतया दुःखादिस्वामित्वाभावेन चाऽहं दुःखीत्यादिप्रत्ययानां कथंचिदपि याथार्थ्यासंभवात् त्वद्भाष्यटीकयोर्बन्धस्याऽध्यासात्मकत्वप्रतिपादनात् स्वपरसिद्धान्तविशेषरहस्याविष्करणपर-**न्यायसुधाग्रन्थे** मम शरीरं, ममेन्द्रियाणि, मम मनः, अहं दुःखीत्यादिप्रत्ययानां शरीरेन्द्रियदुःखादिषु भासमाने आत्मीयत्वांश एवाऽऽरोपितविषयत्वं, न तु शरीरादिस्वरूपेऽपीति स्वमतनिष्कर्षात् साक्षिणो याथार्थ्यनियमाभावाच्च त्वत्सिद्धान्ते तेषां सुनिश्चितेऽध्यासरूपत्वे यदन्यत्र प्रपञ्चमिथ्यात्वनिराकरणप्रस्तावे—

"सत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितम् ।
साक्षिसिद्धस्य न क्वाऽपि बाध्यत्वं तददोषतः ॥"

इत्यादि साक्षिणो याथार्थ्यनियमकथनं, यच्च सांख्यमतदूषणप्रस्तावे आत्मनः कामादिस्वामित्वकथनं न तत्र त्वयाऽभिनिवेष्टव्यम्; किन्तु परमतदूषणलोभेन तद्दुराग्रहकृतमौढ्येन वा स्वसिद्धान्तविरुद्धभाषिणः स्वकीया इत्येव शोचनीयम्; याननुसृत्याऽद्यतना अपि त्वदीयाः परमतसिद्धाविद्यादूषणादिप्रस्तावेष्वनादिभावस्य निवर्त्य-

१. वे. सू. १. ४. १५. अधि. १० । २. वे. सू. ३. ४. ४४. अधि. ७ ।

त्वमयुक्तमित्यादि स्वसिद्धान्तविरुद्धमेव कल्पयन्ति । त्वन्मते ह्यनादिभावरूपैवाऽविद्या ज्ञाननिवर्त्या च । तस्माज्जीवे दुःखित्वादिप्रत्ययानां त्वन्मतेऽध्यासरूपत्वात् स्वस्वान्तःकरणगतदुःखादिस्वामित्वाध्यासमात्रजुष्टाज्जीवभावात् वास्तविकसकलजीवान्तःकरणगतनिखिलदुःखादिस्वामित्वानुभवनिरन्तराकुलितस्त्वन्मतसिद्धपरमेश्वरभाव एव पापीयानिति कथं त्वदीयः परमेश्वरो जीवभावं नाऽर्थयेत् ? । अतो न तस्य जीवभावाननुमतिशङ्कावकाश इति भावः ॥ २५ ॥

**स्यादेतत्**—दुःखस्वामित्वादिरूपं दुःखित्वादिकं न हेयं, येन परमेश्वरस्याऽपि हेयसंबन्धः स्यात्, किन्तु दुःखित्वादिप्रयुक्तं (१) जीवत्वम् । न च तत्परमेश्वरेऽस्तीत्यादिशङ्कामुद्भाव्य परिहरति—

**दुःखित्वाद्येव हेयं न यदि कथय तत् किन्तु बन्धेषु हेयं**
**नीचत्वं तत्प्रयुक्तं यदि तदिदमिति व्याकुरुष्व स्फुटोक्त्या ।**
**यद्याक्रन्दादिदुःखाद्युदितनयहतं नाऽपि सार्वत्रिकं त-**
**द्यत्किंचित्तस्य कार्यं यदि तदिह जगद्व्याप्यते नेत्यसिद्धम् ॥२६॥**

यदि "तत्राऽपि (२) तद्व्यापारादविरोध" इति त्वदीयाधिकरणभाष्योदाहृतम्—

(३) नरकेऽपि वसन्नीशो नाऽसौ दुःखभुगुच्यते ।
नीचोच्चतादिदुःखादेर्भोग इत्यभिधीयते ॥
नाऽसौ नीचोच्चतां याति पश्यत्येव सदा (४) प्रभुः ।

इति वचनमवलम्ब्य दुःखादिप्रयुक्तं नीचत्वमेव दुःखादिभोक्तृत्वम् । तदेव च हेयमित्युच्यते । तर्हि किं तन्नीचत्वं नामेति प्रश्ने विवरणीयं त्वया । दुःखादिहेतुकमाक्रन्दादिकमिति चेत्; तदपि दुःखादिषु दर्शितेनैव न्यायेन निरस्तम् । तदपि हि शरीरेन्द्रियविकाररूपत्वादाश्रयाश्रयिभावेन जीवं न स्पृशति । स्वस्वामिभावेन तु परमेश्वरमेव स्पृशति । किञ्च न तत्सार्वत्रिकम् । लोके हि मानी धीरोदात्तस्तापसादिश्च महति दुःखेऽपि नाऽऽक्रन्दति, न रोदिति, न चाऽन्यं कमपि देहेन्द्रियविकारमापद्यते, न च तदपायार्थमितरप्रार्थनादैन्यमवलम्बते इति तस्य तद्दुःखं हेयं न स्यात् । कापालिकादिश्च भिक्षुकः स्वाङ्गच्छेद(५)कर्दमकण्टकतप्तवालुकाशयनादिभिर्महद्दुःखमनुभवन्नपि न तत्प्रयुक्तं नैच्यमनुभवति, किन्तु याचनाप्रयुक्तमेवेति तस्याऽपि तद्दुखं हेयं न स्यात् ।

१. नीचत्वमिति ग० पु० । २. वे० सू० ३. १. १७. अधि० १३ ।
३. कारिकेयं मध्वभाष्ये १२८ १. ७ । ४. प्रभुत्वत इति भाष्यपाठः ।
५. कण्टककर्दमेति घ० पु० ।

**अथोच्येत**—नाऽयमसार्वत्रिकदोषो लगति। यावत्किञ्चिद् दुःखादिकार्यं तत्सर्वं नैच्यमित्यङ्गीकाराद्वीरादीनामपि दुःखानुभवादिप्रयुक्तविकारनिरोधप्रयत्नतदपनयनोपायचिन्तादि यत्किंचित्तत्कार्यमस्ति—इति। नैतदपि युक्तम्; परमेश्वरेऽपि नानाविधजगद्व्यापारस्य दुःखादिप्रयुक्ततया कल्पयितुं शक्यत्वेन नैच्याभावासिद्धिप्रसङ्गात्। त्वयाऽप्यानन्दमयाधिकरणे "लोके चतुर्विधा पुंसां प्रवृत्तिः—सुखार्था, दुःखनिवृत्यर्था, सुखोद्रेकप्रयुक्ता, दुःखोद्रेकप्रयुक्ता चेति। तत्र प्रवृत्तित्रयस्याऽपि परमेश्वरेऽनुपपन्नत्वात् सुखोद्रेकप्रयुक्तैव लौकिकानां नृत्यादाविव तस्य जगत्सृष्ट्यादौ प्रवृत्तिरि"ति निरूपितम्। तत्तदा शोभते यदि तस्य दुःखित्वं न स्यात्। तत्सत्वे तु केचन जगद्व्यापारा दुःखोद्रेकप्रयुक्ताः कुतो न स्युः?। तथात्वे पुनरपि दुःखोद्रेकहेतुं जगद्व्यापारं न कुर्यादिति चेत्, भ्रान्तोऽसि। न हि दुःखोद्रेकाद्रोदनादौ प्रवृत्तिरभिसन्धिपूर्विका तन्निवृत्यर्था, प्रत्युत शिरोऽक्षिरोगादिदुःखोद्रेकात्पुनरपि तदुद्रेके हेतव एवाऽऽक्रन्दशिरस्ताडनाश्रुविमोचनादिप्रवृत्तयो दृश्यन्ते। ईश्वरस्य दुःखित्वादेः श्रुतिविरुद्धत्वात् तद्व्यापाराणां तत्प्रयुक्तता कल्पयितुं न शक्यत इति परिशेषसिद्धिरिति चेत्, सत्यं तस्य दुःखित्वादिकं श्रुतिविरुद्धमिति। तथाऽपि त्वन्मतपर्यालोचनया तस्य दुःखादिस्वामित्वरूपं तदापतितमिति पूर्वोक्तं त्वमेव परिभावय। तथाऽपि तत्र दुःखित्वप्रयुक्तं कार्यं न भवतीति चेत्, न; तत्र सुखित्वप्रयुक्तकार्याभ्युपगमे तद्वदेव दुःखित्वसत्वे तत्प्रयुक्तकार्यस्याऽपि दुर्वारत्वात्। यदि तु—

"आहूतस्याऽभिषेकाय विसृष्टस्य वनाय च।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविप्लवः॥"

इत्यादौ धीरोदात्तमहापुरुषगुणत्वेन प्रसिद्धामवहित्थां तत्राऽभ्युपैषि तदा सुखोद्रेकप्रयुक्तमपि कार्यं तत्र न स्यादेव। न चेदितरदपि केन वार्यते। किञ्च दुःखकार्यमात्रस्य हेयत्वोक्तिरयुक्ता। दुःखकार्यस्याऽपि भगवद्भजनादेः पुरुषार्थताया दृष्टत्वात्; "चतुर्विधा भजन्ते मा"मित्यादिशास्त्रसंमतत्वाच्च। तस्मात् दुःखकार्यमाक्रन्दादिकमेव(१) हेयतया वक्तव्यमिति तस्याऽसार्वत्रिकत्वदोषो युक्त एवेति भावः॥ २६॥

एवं दुःखित्वस्य कार्यमेव हेयम्; न दुःखित्वमिति परोक्तमनुसृत्य दोष उक्तः। इदानीं वस्तुतो दुःखित्वमेव हेयम्। न तत्कार्यमित्युपपादयति—

**एवं सुखित्वकृतमेव हि नर्तनादि**
**ग्राह्यं फलं तव भवेन्न सुखित्वमेव।**

१. आक्रन्दादिकमात्रमेवेति० घ० पु०।

अस्त्वित्युशन्तमनुभूतिमपि क्षिपन्तं
लोकाः पिशाच इति निश्चिनुयुर्भवन्तम् ॥ २७॥

दुःखकार्यमेव हेयं न दुःखमित्यङ्गीकारे न्यायतौल्यात्सुखकार्यमेवोपादेयं न सुखमित्यपि त्वयाऽङ्गीकर्तव्यं स्यात् । नन्वस्त्वेतत् । एवं सति परमेश्वरः शक्तिमत्त्वेऽपि दुःखित्वप्रयुक्तमेव कार्यं निरुन्धे, हेयत्वात न तु सुखित्वप्रयुक्तमपि, पुरुषार्थत्वादित्युपपादनं संभवति । "को ह्येवाऽन्यात् कः प्राण्यात्" । यदेष आकाश आनन्दो न स्यात्" "यदा वै सुखं लभते अथ करोति नाऽसुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोती"ति श्रुत्योः प्राणयितृत्वादिरूपः सर्वोऽपि परमेश्वरव्यापारः सुखोद्रेकप्रयुक्त इत्येतत्परतया मदीयग्रन्थेषु व्याख्यानमपि सङ्गच्छत इति यद्याशंसेथाः तदा सकलानुभवमर्यादाविरोधस्तावदनिवार्यः । सुखदुःखे हि निरुपाधीच्छाद्वेषविषयतया पुरुषार्थापुरुषार्थरूपे सकलानुभवसिद्धे न तत्कार्ये ।

एवमनुभवविरोधमप्यविगणय्य सुखदुःखकार्ययोरेव पुरुषार्थापुरुषार्थरूपत्वं अभ्युपगम्यते चेत्स्वाभ्युपगमानुसारेण त्वदीयसुखादेः पुरुषार्थपर्यवसायितानिर्वाहाय सुखानुभवकालेषु सर्वेषु यत्किञ्चिन्नृत्यगीतादिकार्यमारभमाणेनैव त्वया स्थातव्यं स्यात् । तथा च लोकास्त्वां पिशाच इत्येव मन्येरन् । पिशाचजातिर्हि यत्किंचित्सन्तोषलाभेऽपि विकटं नृत्यति गायति चेति प्रसिद्धिः । अतस्तान्त्रिकेण त्वया लोकशास्त्रमर्यादामनुसृत्य सुखदुःखयोरेव पुरुषार्थापुरुषार्थरूपत्वमङ्गीकरणीयमिति ईश्वरस्त्वन्मते नितान्तहेयसंबन्धाकुलितः । ततो वरमल्पदुःखाध्यासमात्रकलुषितो जीवभाव इति मत्वा पूर्णापूर्णगुणत्वविरोधं अचिन्त्यया निजशक्त्या परिभूय जीवभावमापद्येतैवेति न पूर्णगुणत्ववाचिना ब्रह्मशब्देन जीवाद्भेदसिद्धिरिति भावः ॥२७॥

ननु ब्रह्मशब्देनैव ब्रह्मणो जीवाद्भेदं प्रसाध्य सिद्धान्त इह न क्रियते; किन्तु निखिलकल्याणगुणाकरे जीववर्गाद्भिन्ने विश्वातिशायिनि भगवति सर्वासां श्रुतीनामैककण्ठ्यं बलवद्भिः परस्परसंवादरूपसामरस्यशालिभिस्तात्पर्यलिङ्गैरवगमय्य तत्तत्तात्पर्यलिङ्गप्रदर्शनेन प्रसाध्य तासामद्वैतेऽत्यन्तवैरस्यं च तत्तन्न्यायैरुपपाद्य सिद्धान्तः क्रियते । ब्रह्मशब्दस्त्वभ्युच्चयमात्रम् । अतो न पूर्वोक्तदूषणानामवकाश इत्याशंक्याऽऽह—

विष्णौ विश्वातिशायिन्यनवधिकगुणे जीववर्गाद्विभिन्ने
सर्वश्रुत्यैकमत्यं समरसबलवल्लिङ्गसङ्गत्युपेयम् ।
अद्वैते च श्रुतीनामधिकविरसतामत्र संसाध्य कुर्या-
स्सिद्धान्तं चेत्किमञ्चेत् फलमुपरि तयोः साधकस्ते नयौघः॥२८॥

त्वन्मते प्राधान्येन जीवब्रह्मभेदसाधनं "(१)पृथगुपदेशादि" त्यधिकरणे कृतम् । अप्राधान्येन तत्साधनं च किञ्चित्किञ्चिद्भेदवाक्यमवलम्ब्य तत्र तत्राऽस्ति । तथा च यद्यत्र सकलद्वैताद्वैतश्रुतिप्राबल्यदौर्बल्यचिन्तया सर्वप्रकारेणाऽपि तत्साधनमिहैव क्रियते तदा तदधिकरणमन्यत्र तत्र तत्र तत्साधनं च निष्फलं स्यात् । तस्मादस्मिन्नधिकरणे ब्रह्मशब्देनैव सिद्धान्त इति त्वयाऽङ्गीकरणीयम् । अत एवाऽऽनन्दमयाधिकरणे "(२)भेदव्यपदेशाच्चे" ति सूत्रस्य पौनरुक्त्यशङ्कानिवारणार्थम्(३) ।

(४) न जीवभेदसूत्राणां शंक्याऽत्र पुनरुक्तता ।
वाक्यान्तरद्योतकत्वात्पृथगित्यत्र पूर्णता ॥

इत्यनुव्याख्यानश्लोकं व्याचक्षाणेन (५) न्यायसुधाकृतोक्तम्—अत्र शास्त्रे तत्र तत्र प्रकरणे ह्यैक्यविवक्षायां चोदितायां तत्तद्गतभेदवाक्यद्योतनेन सूत्रेषु भेदसमर्थनं क्रियते । अतस्तात्पर्यभेदान्न पुनरुक्तता शङ्क्या । तथा हि—जिज्ञासावाक्येष्वभेदशंकायां तद्गतब्रह्मशब्देनैव भेदसमर्थनम् । जिज्ञास्यस्य ब्रह्मणो जीवत्वे शङ्किते तत्पूर्ववाक्योक्तलक्षणेन भेदसाधनमित्यादिस्वयमूह्यम् । एवमेव "भेदव्यपदेशाच्चाऽन्य"इत्यादावपि पुनरुक्तादोषः परिहरणीय इति । इयांस्तु विशेषः—अन्नमयादिशब्दा विकारार्थमयट्प्रत्ययानुरोधाज्जीववाचिनः । तेषु ब्रह्मशब्दादिप्रयोगस्तु ब्रह्माभेदविवक्षयेति शङ्किते तत्प्रकरणगतेन "स यश्चाऽयं पुरुषे" इति भेदव्यपदेशेन प्रत्यवस्थानमित्यादि सङ्गच्छते । इह तु जिज्ञासावाक्येष्विव जिज्ञास्यं ब्रह्म निर्विशेषजीवचैतन्यरूपमिति शंकाहेतोः कस्य चिदभावात्सर्ववेदान्तानामप्यखण्डपरत्वेन सगुणे ब्रह्मणि मानं नाऽस्त्येवेति(६) त्वदीयपूर्वपक्षदर्शनाच्च सर्ववेदान्तावलम्बने पूर्वपक्षे जिज्ञासावाक्यगतेनैकेन ब्रह्मशब्देन प्रत्यवस्थानं न सङ्गच्छते ॥ २८ ॥

अपि चाऽग्रे निरूपणीयमपि न्यायजातं न जीवेश्वरयोर्भेदं व्यवस्थापयितुं भवतीत्याह—

**अग्रे वाच्योऽपि कस्ते कथय नय इह स्थापको भिन्नतायाः**
**जीवेशित्रोर्गुणानां स खलु विषमता सा तु दत्तोत्तरैव ।**

१. वे. सू. २, ३. २८. अत्र भाष्यम्—भिन्नो चिन्त्यः परमो जीवसङ्घात्पूर्णः परो जीवसङ्घो ह्यपूर्णः । यतस्त्वसौ नित्यमुक्तो ह्ययं च बन्धान्मोक्षं तत एवाऽभिवाञ्छेत् । इति सोपपत्तिककौशिकश्रुतेः भिन्न एव जीवः । इति ( म. भा. ११८. २. ४. । २. वे० सू० १. ३. ५ । ३. निराकरणार्थमिति ख० पु० । ४. अनुव्या. १६९. १. ११ । ५. न्यायसु. १४०-१. ५. । ६. नास्तीति ग० पु० नास्तीत्येव घ० पु० ।

निर्भेदत्वं तवेष्टं विषमगुणजुषां प्राक्क्रियार्थादिकाना-
मन्यत्वस्योक्तिरन्योऽन्तर इति बहुशः संमता भेदहीने ॥२९॥

इत्थं हि त्वया तत्र तत्र न्याया निरूपिताः—प्रत्यक्षं तावज्जीवस्येश्वराद्भेदे प्रमाणम् । यद्यप्यनवगतेश्वरस्य पुरुषस्य स्वात्मनि तद्भेदो न प्रत्यक्षः; तथापि शास्त्रावगत-सार्वज्ञ्यसर्वशक्तिकत्वादिमदीश्वर एव स्वात्मानं च तद्विरुद्धाल्पज्ञत्वाल्पशक्तिकत्वादि-धर्मकं साक्षिणाऽनुभवतः स प्रत्यक्ष एव । यो हि यमर्थमधिगम्य तद्विरुद्धधर्माणं यमर्थं पश्यति स तस्मात्तस्य भेदं प्रत्यक्षयतीति सर्वानुभवसिद्धम् । तथा च शास्त्रीय-लक्षणज्ञानसाचिव्येन रत्नतत्वसाक्षात्कार इव शास्त्रीयेश्वरज्ञानसाचिव्येन स्वात्मनि तद्भेदसाक्षात्कारो नाऽनुपपन्नः । एवं प्रत्यक्षागमावगतेन जीवेश्वरयोर्विरुद्धगुणवत्वेन दहनतुहिनवद्भेदोऽनुमातुं शक्यत इत्यनुमानमपि तद्भेदे प्रमाणम् । तथा—

(१)भिन्नो चिन्त्यः परमो जीवसङ्घात्पूर्णः परो जीवसङ्घो ह्यपूर्णः ।
यतस्त्वसौ नित्यमुक्तो ह्ययं च बद्धो मोक्षं तत एवाऽभिवाञ्छेत्(२) ।

इति पूर्णापूर्णादिविरुद्धधर्मवत्वोपपत्तिमुखप्रवृत्ता कौशिकश्रुतिरपि तत्र प्रमाणम् । न च श्रुतिर्व्यावहारिकभेदपरा । 'एतमन्नमयमात्मानमुपसंक्रम्य, 'निरञ्जनः परमं साम्यमुपैति' 'प्रज्ञानेत्रो लोक' इत्यादि श्रुतिषु मुक्तावपि प्राप्यप्राप्तत्वसादृश्यप्रतियोग्य-नुयोगित्वनेतृत्वनेतव्यत्वादिविरुद्धगुणवर्णनेन तद्भेदसिद्धेः । न चाऽभेदश्रुतिविरोधादु-दाहृतश्रुतीनामन्यथा नयनं शङ्क्यम् । सोपपत्तिककौशिकश्रुतिविरोधेनोपजीव्यविरोधेन च दुर्बलानामभेदश्रुतीनामेव गौणाभेदपरत्वौचित्यात् । तत्वमसीत्याद्यभेदश्रुत्या यदि जीवमनूद्य तस्येश्वरैक्यं बोध्यते तदाऽल्पज्ञत्वादिधार्मिकतया जीवग्राहकं साक्षिप्रत्यक्ष-मुपजीव्यम् । यदि त्वीश्वरमनूद्य तस्य जीवैक्यं बोध्यते तदा सर्वज्ञत्वादिधर्मकेश्वरग्राहकं "यः सर्वज्ञ" इत्यादिशास्त्रमुपजीव्यमित्युभयथाऽपि विरुद्धगुणमुखेन भेदपर्यवसायिनोप-जीव्यप्रमाणेन विरोधस्याऽवश्यंभावादिति । तदेतत्सर्वं भेदप्रमाणं विरुद्धगुणवत्वोप-जीवकमुपन्यस्तमिति विरुद्धगुणाक्रान्तिरेकैव तत्र भेदसाधको न्यायः पर्यवसितः । तत्र च प्रागेव दत्तमुत्तरम् । जीवे सतामधिकानन्दादीनामावरणेनाऽल्पानन्दत्वाद्यनुभवस्य त्वयाऽङ्गीकृततया तन्न्यायेन ब्रह्मगुणानां निरतिशयसर्वज्ञत्वसर्वशक्तिकत्वादीनां जीवे सतामेव संसारमुक्तिदशयोरावरणेनाऽल्पज्ञत्वाल्पशक्तिकत्वाद्यनुभवसंभावज्जीवे तत्सत्वान-भ्युपगमेऽपि ब्रह्मण्यैश्वर्यवशादणुत्वमहत्वाद्यविरोधस्य च त्वयाऽङ्गीकृततया तन्न्याये-

१. श्रुतिरियं मध्वभाष्ये कौशिकश्रुतित्वेन प्रतिपादिता (म० भा० ११८, २.४.)
२. गच्छेदिति म० भा० पाठः ।

नाऽधिकगुणस्यैव ब्रह्मणोऽल्पगुणजीवसंभवाच्च जीवब्रह्मणोः विरुद्धगुणवत्त्वमसिद्धमिति ।

एवञ्च रत्नशास्त्रालोकनप्रभवस्य लक्षणज्ञानस्य किञ्चिद्रत्नलक्षणे तदन्यलक्षणत्व-विषयतया भ्रमत्वे तन्मूलस्य रत्नविशेषप्रत्यक्षस्येव जीवब्रह्मणोविरुद्धगुणवत्त्वासिध्या तद्ज्ञानस्य भ्रमत्वे तन्मूलस्य भेदप्रत्यक्षस्य भ्रमत्वावश्यंभावान्न प्रत्यक्षं भेदे प्रमाणम् । हेत्वसिध्यप्रयोजकत्वादिभिर्नाऽनुमानं प्रमाणम् । जीवेऽपूर्णत्वबद्धत्वयोरसिध्या पूर्णापूर्ण-त्वयोर्बद्धत्वमुक्तत्वयोश्च विरोधासिध्या वा विरुद्धतदुभयवत्त्वोपपत्तिमुखेन भेदप्रतिपादने श्रुतेस्तात्पर्यं कल्पयितुं न युक्तमिति श्रुतिरपि तत्र न प्रमाणम् । "भिन्नोऽचिन्त्यः" इति श्रुतिरस्तिचेत्तस्या अभेदप्रतिपादन एव तात्पर्यं सुवचम् । परमो जीवमद्वाद्भिन्नो न चिन्त्यः किन्तु भिन्न एव चिन्त्य इति । पूर्णः पर इत्याद्यपि भेदचिन्तननिषेधापेक्षित-निषेध्यप्रसक्तिपरतया सुयोजम् । जीवब्रह्मणोर्हि प्रत्यक्षागमाभ्यां अपूर्णत्वपूर्णत्वे बद्धनि-त्यमुक्तत्वे चाऽवगम्येते । ते च लोकतो विरुद्धत्वेन प्रतीयेते । तन्मूलेन भेदभ्रमेण भेदानुचिन्तनं प्रसक्तमिति ।

अपि च नैवाऽत्र विवदितव्यम्—कथं विरुद्धगुणसमावेशे भेदाभाव इति । विरुद्ध-गुणशालिनामप्यर्जुनाखण्डलादीनां त्वया भेदाभावस्येष्यमाणत्वात् । त्वया (१) "एक आत्मनः शरीरे भावादि" त्यधिकरणेऽर्जुनादीनामन्योन्यानभिमतखाण्डवदहनतत्प्रशम-नादिकृतवतामाराधकाराध्यत्वादिविषमगुणशालिनामपि निर्भेदत्वं व्यवस्थापितम् । आख-ण्डलादयोंऽशिनः अर्जुनाद्याः तदंशाः । अंशाः पृथग्भूय संचारदशायामपि अंशिना सहाऽभिन्ना एव पुनरपि तेनैक्यं च प्रतिपद्यन्त इति तत्र मतम् ।

एतेन जीवब्रह्मणोर्भेदाभावे ब्रह्मभोगानां जीवेऽप्यनुसन्धानं स्यादित्यपि निरस्तम् । त्वन्मते भेदाभावेऽप्यर्जुनगतेन्द्रभोगाननुसन्धानवज्जीवगतब्रह्मभोगाननुसन्धानोपपत्तेः । इन्द्रभोगादीनामर्जुनादिषु (२) यदननुसन्धानं तद्भेदाभावेऽपि भूम्याद्यपकृष्टदेशावस्था-नगर्भप्रवेशमानुषान्नोपभोगादिकं निमित्तीकृत्याऽचिन्त्याप्रतिहत(३)शक्तिकेन परमेश्वरेण क्रियत इति हि त्वयोक्तम् । एवं देहविशेषप्राप्त्यादिकं निमित्तीकृत्याऽचिन्त्यशक्तिकेन

१. वे सू. ३. ३. ५५. अत्र **मध्वभाष्यम्** । अंशांशिनोरेकत्वमेव अंशिकर्म-विनिर्मिते शरीर एवांऽशस्य भावात् । ज्ञानादिभेदे विद्यमानेऽपि नांऽशांशिनोः पृथग्भाव एव । तदुपासनादिभोगादंशस्य । परमसंहितायां च—"अंशिनस्तु पृथग्जाता अंशास्तस्यैव कर्मणा । पुनरैक्यं प्रपद्यन्ते नाऽत्र कार्या विचारणे"ति ( म. भा. १४१.१.१.) २. अत्र **तत्त्वप्रकाशिका** ।—"अंशिगतस्य चांऽशेन सर्वस्या-ऽननुसन्धानमीश्वराचिन्त्यशक्त्यायत्तम् ।" इति । ( त० प्र० १८२. १. ८. ) ३. अप्रतिहतेनि गु० पु० नास्ति ।

परमेश्वरेण जीवे पारमेश्वरस्य जीवान्तरगतस्य च भोगस्याऽननुसन्धानं क्रियत इति किमिति त्वया वक्तुमशक्यम् ? ।

यत्तु परमेश्वरस्य जीवाभिन्नत्वे तस्यैश्वर्यमेव न भवेत् । यो जीवाभिन्नो नाऽसावचिन्त्यशक्तिकतारूपैश्वर्यवान्, यथा देवदत्त इति व्याप्तेरिति; तत्तुच्छम् । यो जीवभिन्नो नाऽसावैश्वर्यवान्, यथा घटः इतिवदप्रयोजकत्वेन व्याप्त्यसिद्धेः । यच्चोक्तमभेदस्याऽननुसन्धानमात्रं व्यापकं, न तु सर्वानुसन्धानम् । अर्जुनादीनामाखण्डलादिगततात्पर्यविषयभोगाननुसन्धानेऽपि तद्गतोपासनाफलानुसन्धानमस्त्येव । एवञ्च जीवब्रह्मणोर्जीवानां चाऽभेदे देवदत्तस्य ब्रह्मगतजीवान्तरगतयत्किञ्चिद्भोगानुसन्धानं दुर्वारमिति । तदपि तुच्छम् । यदि ह्यभेदे सत्यप्यननुसन्धाने एकस्मिन्नेवाऽननुसन्धानमनुसन्धानं च विरुद्धं प्रसज्येतेत्यनुकूलतर्कमुपजीव्याऽननुसन्धानस्याऽभेदव्यापकत्वं गृह्यते तदा सर्वानुसन्धानमेव व्यापकम्, कस्यचिदप्यननुसन्धाने तद्विरोधसमाधानालाभात्। यदि त्वभेदेऽपि कस्यचिदननुसन्धानं संभवति तदीयाचिन्त्यशक्तिबलेनाऽनुसन्धानाननुसन्धानविरोधविधूननादिति सर्वानुसन्धानस्य व्यापकत्वं नेष्यते तदाऽनुसन्धानमात्रमपि न व्यापकं तद्बलेनैव क्वचिन्न कस्याऽप्यनुसन्धानमित्यपि वक्तुं शक्यत्वात् । सहचारदर्शनमात्रस्याऽप्रयोजकत्वादित्यास्तामेतत् ।

**स्यादेतत्**—मा भूद्विरुद्धगुणाक्रान्त्या भेदसिद्धिः । अन्यत्वव्यपदेशेन तु स्यात् । दृश्यते हि साक्षादेव जीवब्रह्मणोरन्यत्वव्यपदेशः "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" "अन्यश्च परमो राजन् तथाऽन्यः पञ्चविंशकः" (१)"भेदव्यपदेशाच्चान्य" इत्यादिश्रुतिस्मृतिसूत्रेषु इति । नैतत्सारम् । त्वन्मते ब्रह्मण्यन्यत्वव्यपदेशस्य भेदासाधकत्वात् । त्वयाऽन्नमयादीनां पञ्चानामपि ब्रह्मभावमभ्युपगच्छताऽन्नमयाद्यभिन्नेष्वेव प्राणमयादिष्वन्योन्तर आत्मेति व्यपदेश इतीष्यमाणत्वात् ।

(२) अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् ।
प्रोच्यते भगवान्विष्णुरैश्वर्यात्पुरुषोत्तमः ॥

इति वचनमुदाहृत्य त्वया तस्य निबर्हणाच्च । जीवे ब्रह्मान्यत्ववचनस्याऽपि तन्न्यायेन भगवदैश्वर्यबलादेव निबर्हणसंभवाच्चेति भावः ॥ २९ ॥

ननु च शब्दानां स्वार्थे वृत्तिरौत्सर्गिकी । अन्यशब्दस्य च भिन्नत्वमेव मुख्योऽर्थः । तथाऽप्यानन्दवल्ल्यामन्नमयादिपर्यायेषु पञ्चस्वपि "येऽन्नं ब्रह्मोपासते । ये प्राणं ब्रह्मोपासते । आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने" ति । "विज्ञानं ब्रह्म चेद्वेद"

१. वे. सू. १. १. २१ । २. कारिकेयं मध्वभाष्ये ( म० भा० ८९. २. ६. ) ।

(१)"अस्ति ब्रह्मेति चेद्वेदे" ति ब्रह्मशब्दाम्नानेन "एतमन्नमयमात्मानमुपसंक्रामति" इत्यादि पर्यायेषु मुक्तप्राप्यत्वात्मशब्दयोः श्रवणेन चाऽन्नमयादीनां पञ्चानामपि ब्रह्मरूपावधारणात् (२) ब्रह्मण्येक"मेवाऽद्वितीयमि" त्यादिश्रुतिभिरेकत्वावधारणात् प्राणमयादिपर्यायेषु "अन्योन्तर आत्मे" ति अन्यशब्दानां मुख्योऽर्थः परित्यज्यते। न च जीवब्रह्मणोरन्यत्वव्यपदेशे मुख्यार्थबाधकमस्ति।

एवं विरुद्धगुणाक्रान्त्याऽपि भेदसिद्धिरौत्सर्गिकी। अणुत्वमहत्वादीनामेकस्मिन्नेव ब्रह्मणि प्रमाणबलेनाऽवधृतत्वात्तत्र विरुद्धगुणवत्त्वमैश्वर्यबलादिति समाधीयते। न चेह तथा बाधकमस्ति। तस्माज्जीवब्रह्मणोर्विरुद्धगुणवत्वेन साक्षादन्यत्वव्यपदेशेन च भेदसिद्धिस्स्यादेवेत्याशङ्कामपाकरोति—

प्राबल्यं भवतोऽप्यभेदवचसां भेदश्रुतिभ्यो मतं
नो चेदन्नमयादयो वद कथं भिन्ना भवेयुर्न ते।
भेदे सत्यपि युज्यते भगवतश्शक्त्यैव निर्दोषता
शक्तः किं न स एक एव बहुधा भिन्नो हरिः क्रीडितुम्॥३०॥

"एकमेवाऽद्वितीयं" "नेह नानाऽस्ति किंचने" त्याद्यभेदश्रुतीनां भेदश्रुतिभ्यः प्राबल्यं तवाऽपि सम्मतमेव। अन्यथा "अन्योऽन्तर आत्मे"ति भेदश्रुत्यनुसारेणाऽन्नमयादीनां भेदो दुर्वारः। न चाऽभेदश्रुतीनां ब्रह्मभेदश्रुतिभ्य एव प्राबल्यं न जीवब्रह्मभेदश्रुतिभ्य इत्यत्र विशेषहेतुरस्ति। एकमेवाऽद्वितीयमित्यादिशब्दस्वारस्यस्याऽस्मदुक्तषड्विधतात्पर्यलिङ्गवत्त्वस्य लाघवस्य वा प्राबल्यहेतोरुभयत्राऽप्यविशेषात्।

**स्यादेतत्**—नाऽभेदश्रुतिप्राबल्याद्ब्रह्मभेदश्रुतीनां मुख्यार्थं परित्यजामः। किन्तु सकलवेदमहातात्पर्यविरोधात्। तथा हि—"सर्वेषामपि वेदान्तानां मोक्ष एव प्रधानं प्रयोजनम्। "तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तत" इति वचनात्। मोक्षस्य च तत्प्रयोजनत्वं न साक्षात् तत्साध्यतया। तस्याऽनेकश्रुतिस्मृतिपुराणैर्भगवत्प्रसादेनैव साक्षात्साध्यत्वावधारणात्। किन्तु यद्ज्ञानेन मोक्षहेतुर्भगवत्प्रसादस्संपद्यते तत्प्रतिपादनद्वारेति वाच्यम्। तत्प्रसादश्च तदीयनिर्दोषगुणोत्कर्षज्ञानाद्भवतीति लोकतो "योमामेवमि"त्यादि भगवद्वचनैश्चाऽवधारितम्। अतः सर्वेषामपि वेदानां भगवतो निर्दोषाशेषगुणपूर्णत्व एव महातात्पर्यम्। तद्विरुध्यते ब्रह्मभेदश्रुतीनां स्वार्थपरत्वे भिन्नानां गुणतारतम्यानुग्राह्यानुग्राहकभावादिदर्शनेन ब्रह्मरूपेष्वपि तत्प्रसक्त्या निर्दोष(३)गुणवत्वासिद्धेः। जीवब्रह्मभेदश्रुतीनां स्वार्थपरत्वे तु तन्न विरुध्यते। प्रत्युत तासा-

१. इदं वाक्यं ग. पुस्तके नास्ति। २. ब्रह्मणश्चेति घ० पु०।
३. अशेषगुणवत्वसिद्धेः ग० पु०।

मतत्परत्व एव विरुध्यते, जीवब्रह्माभेदे जीवदोषेण ब्रह्मणोऽपि सदोषत्वापत्तेः। तस्माद्ब्रह्मभेदश्रुतीनामेव स्वार्थपरित्यागो न जीवब्रह्मभेदश्रुतीनामिति विशेषो युक्त इति चेत्—

मैवम्; अन्नमयादीनां विश्वतैजसादीनां च ब्रह्मरूपाणां भेदश्रुत्यनुसारेण विरुद्धगुणवत्वानुसारेण च भेदे सत्यपि भगवदैश्वर्यबलादेव निर्दोषाशेषगुणपूर्णतोपपत्तेः। न हि भगवानशेषमपि स्वेच्छया कर्तुमकर्तुमन्यथा कर्तुमपि शक्त इति वदतस्तव लीलया भिन्नो भवन्नप्यहं निर्दोषाशेषगुणपूर्णः स्यामिति स्वसङ्कल्पेन भेदमास्थाय क्रीडितुं न शक्त इति वक्तुं शक्यम्। न च वाच्यं तथा सङ्कल्पमेव भगवान्न करोतीति। भेदश्रुत्या विरुद्धधर्माक्रान्त्या चाऽन्नमयादीनां विश्वतैजसादीनाञ्च स्वतः प्राप्तस्य भेदस्याऽपवादकाभावेन तस्याऽवश्यमङ्गीकर्तव्यत्वेन तथा संकल्पं करोतीत्येव वक्तव्यत्वात्। तस्माद्गत्यन्तराभावाद्भेदनिषेधश्रुतीनां प्रबलत्वेन भेदापवादकत्वमास्थायैव तथा सङ्कल्पं न करोतीति निर्वहणीयम्। प्राबल्यं च भवज्जीवब्रह्मभेदश्रुतिभ्योऽपि भवेत्। विशेषहेत्वभावात्। न च ब्रह्मनिर्दोषत्वश्रुत्यनुरोधविरोधौ विशेषहेतू। दुःखादिदोषाश्रयत्वं सदोषत्वं इत्यभ्युपगमे त्वन्मतेऽपि दुःखादीनामन्तःकरणधर्मत्वेन जीवस्याऽपि निर्दोषत्वात्। दुःखादिस्वामित्वं तदित्यभ्युपगमेऽपि त्वन्मते ब्रह्मण एव वा ब्रह्मणोऽपि वा दुःखादिस्वामित्वेन सदोषत्वानिवारणात्। दुःखादिमत्वाध्यासशालित्वं तदिति चेन्न। तस्याऽप्यशेषविशेषदर्शिनि ब्रह्मण्यसंभवाद्ब्रह्मणो विशेषदर्शनेनैव तदभिन्नस्याऽपि विशेषदर्शनवत्वेऽपि ब्रह्मतद्धर्माणां जीवं प्रति तदीयानन्दवदावृतत्वस्य तवाऽपि संमतत्वेन ब्रह्मणो विशेषदर्शनस्य जीवं प्रत्यसत्कल्पत्वात्। ब्रह्म प्रति स्वाभिन्नजीवगतदुःखाद्यध्यासस्याऽनावृतत्वेऽपि देवदत्तमुखाभिन्नप्रतिमुखगतश्यामत्ववक्रत्वादेर्विशेषदर्शिनं देवदत्तं प्रतीव ब्रह्म प्रति हेयत्वाभावात्। मन्मते बिम्बप्रतिबिम्बौ भिन्नौ, प्रतिबिम्बगतवक्रत्वादयोऽपि सत्या इति चेन्न। येषां तावभिन्नौ ते च वक्रत्वादयोऽध्यस्ता इति मतं तेषामपि स्वप्रतिबिम्बगतवक्रत्वादिदर्शनेन विषादाद्यभावात्, प्रत्युत—

प्रतिबिम्बगताः पश्यन् ऋजुवक्रादिविक्रियाः।
पुमान् क्रीडेद्यथा ब्रह्म तथा जीवस्य विक्रियाः।

इति कल्पतरूक्तरीत्या हर्षदर्शनात्। एतेन जीवगतासर्वज्ञत्वाल्पशक्तिकत्वपारतन्त्र्यादिकं दोष इत्यपि निरस्तम्। जीवस्य ब्रह्माभेदसिद्धौ तस्य सर्वस्याऽप्यध्यस्तत्वोपपत्तेः। तस्मान्न भेदश्रुत्यवलम्बनेन भेदकश्रुत्यवलम्बनेन वा जीवब्रह्मभेदसिद्धिप्रत्याशा कर्तव्येति भावः॥ २०॥

यदत्राऽधुनिकोक्तं कर्ममीमांसायां व्युत्पादितैः शब्दान्तरादिभेदप्रमाणैः जीवब्रह्मणोर्भेदस्सिध्यति। अस्ति "त्वेष एव जीवं प्रबोधयति एतस्माज्जीव उत्तिष्ठती" ति विरु-

द्व्यर्थधातुनिष्पन्नाख्यातरूपं **शब्दान्तरम्**, "नित्यः परो नित्यो जीवः" इत्यप्रत्यभिज्ञायमानपुनश्श्रुतिरूपोऽभ्यासः; "द्वा सुपर्णे"त्यादि **संख्या**, "अनश्नन्नित्यादिको" **गुणः**, "यतो वाचो निवर्तन्त" इति **प्रकरणान्तरम्**, जीवेशाविति **नामधेयभेदश्चेति**, तदिदं प्रत्यक्षादिषु भेदप्रमाणेषु पराहतेषु शब्दान्तराद्युपन्यसनं प्रतिग्रहलब्धं हस्तिनमविक्रीय स्वगृहे स्थापयितुकामस्य मुग्धश्रोत्रियस्य हस्तिपकेन तद्ग्रासे पृष्टे स्वगृहे सम्पादितान् सर्वान् दर्भमुष्टीन् क्रमेण तदग्रे निहितवतः तेषु कबलमात्रस्याऽप्यपर्याप्तेषु क्षणेन निगीर्णेष्वनन्ततः स्वकरस्थितदर्भपवित्रनिधानमनुकरोतीति सोपहासं दूषयति—

**शब्दान्तरादिकथनं त्विहभेदसिध्यै**
**हासास्पदं सदसि दर्भपवित्ररीत्या ।**
**पूर्वत्र तन्त्र इव काल्पनिकेऽपि भेदे**
**तेषां घटेत किमिहाऽपि न चारितार्थ्यम् ॥३१॥**

**कर्ममीमांसकै**रिदं (१) शब्दान्तरादिकं मुख्यभेदे प्रमाणतया नोपन्यस्तम् । न हि तैः शब्दान्तरादिकं प्रदर्श्योपपाद्यमानः तदभावं प्रदर्श्योपपाद्यमानश्च कर्मभेदः शास्त्रभेदो वा अन्योन्याभावादिरूपो मुख्यभेदः । (२)"सप्तदश प्राजापत्यान्पशूनालभत" इत्यत्र (३) "दधि मधु घृतमापो धानाः करम्भास्तण्डुलास्तत्संसृष्टं प्राजापत्यमि" त्यत्र "ऐन्द्रं दध्यमावास्यायां, ऐन्द्रं पयोऽमावास्यायामि" त्यत्र च (४) प्राजापत्यपशूनां प्राजापत्यदध्यादीनां ऐन्द्रदधिपयसोश्च (५) प्रदानयौगपद्येन प्रजापत्याद्युद्देशेन तत्तद्द्रव्यविषयसंकल्परूपाणां यागानामेकैकत्वेऽपि सप्तदश प्राजापत्ययागाः सप्त दध्यादियागाः द्वौ दधिपयोयागाविति भेदोपपादनात् । "सोमेन यजेते" त्यत्र

१. शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तररूपाणि कर्मभेदे षट् प्रमाणानि **मीमांसकैः** द्वितीयाध्याये निरूपितानि । अत्र द्वितीयाध्यायद्वितीयपादे प्रथमाधिकरणे शब्दान्तरं, द्वितीयाधिकरणेऽभ्यासः, सप्तमाधिकरणे संख्या, अष्टमे संज्ञा, नवमे गुणः, तृतीयपादीयैकादशाधिकरणे प्रकरणान्तरं च निरूपितानि । तत्राऽपर्यायधातुभेदः शब्दान्तरम्, अनन्यपरविधिपुनःश्रवणमभ्यासः, पृथक्त्वनिवेशनी एकत्वाधिका संख्या, तादृशी च संज्ञा, पूर्वकर्मण्यसंभवन्निवेशो गुणः, अनुपादेयगुणविशिष्टानुपस्थितिः प्रकरणान्तरं च कर्मभेदकानि प्रमाणानि ।

२. एतच्च संख्याधिकरण उदाहृतम् । ३. दधि मधु घृतं पयो धानाः उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यं" इति करम्भपदरहितं, तत्स्थाने पयःपदविशिष्टं च **मीमांसकग्रन्थे**षूपलभ्यते । ४. प्रजापतिदेवताकाः पशुद्रव्यकाः सप्तदश यागाः कर्तव्या इति तदर्थः । ५. देवताया एकत्वेऽनेकेषामपि हविषां सकृदेव तद्देवतोद्देशेन त्यागः

इन्द्रवाय्वाद्युद्देशेन तत्तत्पात्रस्थितसोमरससंकल्परूपाणां त्यागानां (१) भिन्नत्वेऽपि अग्निहोत्रञ्जुहुयादित्यत्राऽऽहवनीयादिषु हविःप्रक्षेपरूपाणां होमानां भिन्नत्वेऽपि भेदनिरासात् । सप्तदश प्राजापत्यानिति वाक्यरूपस्य शास्त्रस्यैकत्वेऽपि भेदोपपादनात् । "व्रीहिभिर्यजेत" "व्रीहीनवहन्ति" इत्यादिवाक्यरूपाणां शास्त्राणां भिन्नत्वेऽपि भेदनिरासाच्च । यद्यपि कर्माऽपि गोत्वादिवदेकमेव नित्यमेकमनेकानुगतं, न त्वाश्रयभेदेन भेदोऽस्ति । अयं चलत्ययमपि चलतीत्यादिप्रत्यभिज्ञया तदैक्यसिद्धेः । तद्भेदबुद्धेराश्रयभेदादुपपत्तेः । सन्ततानुपलब्धेश्च शब्दवद्व्यञ्जकाभावेनोपपत्तेः । एवमन्यत्र कर्मैक्येऽपि यत्र शब्दान्तरादिद्वैतीयकप्रमाणमस्ति तत्र कर्मभेदोऽङ्गीक्रियते । अतश्शब्दान्तरादिप्रमाणषट्कावधिः कर्मभेदः । ततः परन्तु तदभेद इति **कौमारिलानां** क्वचित्पक्षे "सोमेन यजेत" "अग्निहोत्रं जुहुयादि"त्यत्र शब्दान्तराद्यभावान्न यागहोमभेदः । किन्त्वेकस्यैव यागस्य होमस्य च देवताभेदेनाऽधिकरणभेदेन(२)वाऽभ्यासमात्रमिति मुख्यो भेद उपपादयितुं शक्यते तथाऽपि "सप्तदश प्राजापत्या" नित्यादिषु तस्मिन्नपि पक्षे मुख्यभेद उपपादयितुं न शक्यत एव ।

अत एवाऽस्वारस्यात्सर्वलोकसिद्धभेदप्रत्यक्षतोऽपि बलवती प्रत्यभिज्ञा शब्दान्तरादितः कथं बलवती न स्यादित्यस्वारस्याच्च सर्वत्र कर्मैक्यपक्षे शब्दान्तरादिस्थलेऽप्यमुख्यभेद एव **कौमारिलै**राश्रितः । (३) "शब्दान्तरे कर्मभेदः" इत्यादिसूत्रस्वारस्यं स्वप्रौढ्या समर्थयितुं परं शब्दान्तरादिस्थले मुख्यः कर्मभेद इति कश्चित्पक्ष उपन्यस्तः । तस्मादनुष्ठानविशेषोपयोग्यपूर्वभेदाद्युपाधिकः काल्प-

इति **मीमांसकमर्यादा ।** १. अयं भावः—"सोमेन यजेते" त्यनेन सोमलताद्रव्यको यागो विधीयते । तस्याः पुरोडाशादिवन्न साक्षाद्यागसाधनत्वम्, किन्तु "सोममभिषुणोति" "सोमं पावयति" "अण्व्या धारया गृह्णाति" इत्यादिविधिबलादभिषुतस्य वस्त्रपरिपूतस्य पात्रविशेषेषु गृहीतस्य तत्वम् । तत्र ग्रहचमसादीनि बहूनि पात्राणि सन्ति । तेषु च इन्द्रवाय्वादिभ्यस्तत्तद्देवताभ्यः पृथक् पृथक् गृह्यते । ततश्च यथासमयं तस्यै तस्यै देवतायै तत्तत्पात्रस्थितो रसः पृथक् पृथक् प्रदीयते । एवं सवनत्रयेऽपि क्रियते । एवं च त्रिष्वपि सवनेषु तत्तद्देवतोद्देशेन क्रियमाणास्त्यागाः यद्यपि बहवस्तथाऽपि "सोमेन यजेते"ति विधिवाक्यगतैकवचनबलात्सर्वेऽपि त्यागाः मिलित्वा एक एव याग इत्यभ्युपगम्यते । एव"मग्निहोत्रं जुहोती" त्यत्राऽपि"द्वे आहवनीये जुहोति" 'चतस्रो गार्हपत्ये" "चतस्रोऽन्वाहार्यपचने" "विराट्संपन्नमग्निहोत्रं जुहोति" इति वचनेन दश आहुतयो यद्यपि क्रियन्तेऽग्निहोत्रे तथाऽपि "अग्निहोत्रं जुहोती" त्युत्पत्तिवाक्यगतैकवचनबलेनैकमेवाऽग्निहोत्रम् । तस्यैकस्य च सायं प्रातरावृत्तिः इति ।
२. चेति. ग. पु. । ३. जै. सू. २. २. १. अधि. १. ।

निको भेद इति शब्दान्तराद्यवसेय इत्येव सर्वेषामपि **कर्ममीमांसकानां** मतम् । उक्तं हि **तन्त्ररत्ने**—(१) "क्रियाणामाश्रितत्वाद्द्रव्यान्तरे विभागस्स्यादि" त्यधिकरणे । अथाऽपि नाम सर्वत्रैलोक्यवर्तिन्येकैव कर्मव्यक्तिरनुष्ठानमात्रन्तु भिद्यते यावदेकापूर्वानुबन्धनमेकेन शास्त्रेण विषयीकृतं तावदेकं कर्म, तदन्यत्तु भिद्यत इति भेदाभेदव्यहारसिद्धिरिति । उक्तं च (२) **वरदराजीये**—शब्दान्तराधिकरणे—"भिन्नापूर्वानुबन्धप्रतिपादनयोग्यताज्ञानं यत्तदेव शास्त्रभेदज्ञानमित्युच्यत" इति । तत्रैव (३) संख्याधिकरणेऽप्युक्तम्—"न च सप्तदश प्राजापत्यानिति वाक्यस्यैकत्वान्न शास्त्रभेदः । न वाक्यभेदः शास्त्रभेदे तन्त्रम् । निरपेक्षभिन्नालौकिकार्थत्वमेव तत् । तच्चेहाऽप्यस्ती"ति ।

एवं च यथा पूर्वतन्त्रे शब्दान्तरादेर्वस्तुतो भेदरहितेऽपि काल्पनिकभेदविषयतयैव चारितार्थ्यं, एवमिहाऽपि तस्य जीवब्रह्मणोर्वास्तविकभेदाभावेऽपि काल्पनिकभेदविषयतया चारितार्थ्यसंभवान्न तत् तयोर्मुख्यभेदासिद्धिरिति (४) भावः ॥ ३१ ॥

एवं पूर्वमीमांसकमर्यादया शब्दान्तरादीनां काल्पनिकभेदविषयतयाऽपि चारितार्थ्यं संभवत्वतीत्युक्तम् । परमर्यादया तु तैस्तथाभूतोऽपि भेदो न सिध्यतीत्याह ।

**निर्मर्यादप्रवृत्ते तव तु हतमते सोऽपि भेदो न सिध्ये-**
**द्यस्त्वं नानाधिकारश्रुतपरगुणसाङ्कर्यमिच्छस्त्युपास्तौ ।**
**अंशानां खल्वभेदेऽप्यपि च भगवता सन्ति शब्दान्तराद्याः**
**तस्मान्मत्स्यादिरीत्या सकलजनिमतां वासुदेवांशभावः ॥३२॥**

(५)दहरविद्या, (६)शाण्डिल्यविद्या, (७)वैश्वानरविद्या, (८)षोडशकलविद्योपकोशलविद्या(९) पर्यङ्कविद्येत्यादिसंज्ञाभेदेन प्रसिद्धाः परब्रह्मविद्या यथायथं शब्दान्तरादिभिः प्रमाणैः परस्परं भिन्नाः । भिन्नत्वादेव तत्तद्विद्याम्नाता उपास्यगुणा (१०)वाजपेयाश्वमेधादिकर्मणामङ्गकलापवद्यथाप्रकरणं व्यवस्थिता इति न तासु परस्प-

---

१. जै. सू. ६. ३. ११. अधि. ११ । २. प्रभाकरमतानुयायिनः भवनाथकृतस्य **नयविवेका**ख्यग्रन्थस्य व्याख्या **नयविवेकदीपिका** वरदराजकृता । सात्र निर्दिश्यते । ३. पू. मी. २. २. अधि. ७. । ४. अर्थ इति ख. घ. पु. । ५. छान्दोग्ये अष्टमाध्याये प्रथमखण्डे निरूपिता । ६. छा. अ. ३ खं. १४ । ७. छा. अ. ५ खं. ११, निरूपिता । ८. छा. अ. ६ खं. ७ निरूपिता । ९. छा. आ. ४ खं. १० निरूपिता । १०. वाजपेयप्रकरणे पठितानामङ्गानां वाजपेयमात्राङ्गत्वम् । न 'तेषा' मश्वमेधे उपसंहारः । एवमश्वमेधेऽपीति ।

स्गुणोपसंहारः । किन्त्वेकैकस्यां विद्यायां नानाशाखाम्नातगुणोपसंहारमात्रम् । सर्वासामपि तासामुपास्यगुणतारतम्येन उपासनाकालतारतम्येन सहकारियज्ञादि-कर्मतारतम्येन च फलभोगतारतम्यवती देवयानमार्गप्राप्या सगुणब्रह्मलोकावाप्तिरपर-मुक्तिरूपा फलमित्यस्माकं मतम् ।

त्वया त्वत्रैवमङ्गीकृतम्–"सर्वविद्याम्नातानां कर्मकाण्डगताग्नेयसौरादिसूक्ताम्नातानां च सर्वेषां गुणानां उपासनायामुपसंहारः कार्यः इति न विद्याभेदेन गुणानां प्रतिप्रकरणं व्यवस्था, किन्तु मानुषाद्या हिरण्यगर्भान्ता मुक्त्यधिकारिणः फलतारतम्येन मुक्तिभाज इत्यधिकारिभेदेनैव । तत्र हिरण्यगर्भः सर्वोत्कृष्टमुक्त्यर्हतया कर्मब्रह्मकाण्डाम्नाता-संकुचितसकलगुणोपसंहारयोग्यः । अन्ये तु स्वस्वभाविमुक्त्यनुसारिगुणोपसंहारयोग्याः । यद्यप्यस्मदादिभिर्मुक्त्यधिकारिभिरुपासनारम्भसमये स्वस्वभाविमुक्तिस्वरूपं प्रतिपुरुष-मनादियोग्यतानुसारेण व्यवस्थिततारतम्यमजानद्भिः स्वस्वोपासनायोग्या गुणा निश्चेतुं न शक्यन्ते । अयोग्यगुणोपसंहारप्रयत्नश्चाऽनर्थफलः । "अचेतनासत्यायोग्यान्य-नुपास्यान्यफलत्वविपर्ययाभ्यामि"ति **संकर्षणसूत्रात्** ।

"अधिकाराधिको यत्नः प्रायशो नोपपद्यते ।
कथंचिदधिके यत्ने दोषः कश्चित्समापतेत् ॥"

इति वचनाच्च । तथाऽपि स्वस्वगुरोरन्यस्माद्वा कुतश्चित्सर्वज्ञात् भाविस्वमुक्तिफल-स्वरूपं ज्ञात्वा तदनुसारेण स्वस्वयोग्यगुणानपि तत एवाऽवगम्य तेषामुपसंहारः कार्यः । न च बह्वल्पगुणप्रतिपादकविद्याविशेषपरिग्रहेण मुक्त्यधिकारिणां फलोत्कर्षापकर्षनिर्वा-हात्प्रकरणाद्युल्लङ्घनेन गुणोपसंहारो न कार्य इति वाच्यम् । सकलगुणोपासनयोग्यस्य हिरण्यगर्भस्य सकलगुणपरिग्रहायाऽन्येषामपि स्वस्वमुक्त्यनुरूपगुणविशेषपरिग्रहाय च नानाप्रकरणविप्रकीर्णगुणोपसंहारावश्यंभावात् । क्वचिदपि विद्यायां सर्वगुणाम्नानादर्शनात् तत्तन्मुक्त्यनुरूपगुणविशेषाम्नाननियमाभावाच्चेति । तदेतत्सर्वं (१)"उपसंहारोऽर्था-भेदाद्विधिशेषवत्समाने च" (२)"प्राप्तेश्च समञ्जसम्"(३) "इतरे त्वर्थसामान्यात्" (४)"पुरुषविद्यायामपि चेतरेषामनाम्नानादि"ति सूत्राणि लिखित्वा रचितेषु त्वदीया-धिकरणेषु स्पष्टम् ।

एवमङ्गीकृतवता त्वया शब्दान्तरादीनां भेदकत्वमेव त्यक्तं भवति । तेषां भेद-कत्वे तैरापाततो विद्याभेदस्याऽनिवार्यत्वाद्विद्याभेदे सति तत्तद्विद्याव्यवस्थितगुणोप-संहारायोगात् । न ह्येकाग्निमुपासीनस्याऽऽयुरादिकमपेक्षितमिति "आयुराशास्ते । सुप्र-

१. वे. सू. ३. ३. ६. अधि. २. । २. वे. सू. ३. ३. १०. अधि. ३. ।
३. वे. सू. ३. ३. १४. अधि. ७. । ४. वे. सू. ३. ३. २५. अधि. १५ ।

जास्त्वमाशास्ते" इत्यादिसूक्तवाकमन्त्रार्पितायुरादिफलकं दर्शपूर्णमासाङ्गप्रस्तरप्रहरणे पुरुषापेक्षामात्रेणोपासनादिकर्मसूपसंहार्यं भवेत्।(१)

अपि च शब्दान्तरादयः कर्मणि भेदका भवन्तु मा वा भूवन्। ब्रह्मणि तु भेदका न भवन्त्येव। तथाहि—"एष ह्येव जीवं प्रबोधयति" "एतस्माज्जीव उत्तिष्ठती" ति विरुद्धार्थधातुनिष्पन्नमाख्यातरूपस्य शब्दान्तरस्य भेदकत्वम्। उद्बोधकत्वावच्छिन्नस्योद्बोध्यत्वावच्छेदो विरुद्ध इत्यन्ततो विरोधमूलमेव वाच्यम्। न तु तद्युक्तम्। ब्रह्मणि त्वया विरुद्धधर्मसमावेशस्य बहुधाऽङ्गीकृतत्वात्। "नित्यः परो नित्यो जीव" इति नित्यत्वाभ्यासस्य परजीवयोरेकत्वे परनित्यत्वश्रुत्यैव जीवस्याऽपि नित्यत्वसिद्धेः तत्पुनःश्रुतिरनर्थिका स्यादिति पुनःश्रुत्यानर्थक्यं मूलं वाच्यम्। तदपि न युक्तम्। कार्यकारणभेदवादिना शक्तिव्यक्तयभेदवादिना च त्वया नित्यत्वानित्यत्वादीनां साङ्कर्यस्याऽङ्गीकृततया तथैव परनित्यत्वेऽपि जीवानित्यत्वं स्यादिति शङ्कावारणेन तत्सार्थकत्वात्। संख्याया गुणस्य च भेदकत्वं "यस्मिन् पञ्च पञ्च जना" "अणोरणीयान् महतो महीयानि" त्यादौ त्वयैव प्रतिषिद्धम्। प्रकरणभेदो न भेदक इति स्पष्टमेव। **भारतादिषु** रामकृष्णादिचरितप्रतिपादकप्रकरणभेदेऽप्यभेदानपायात्। सृष्टिसंहारादिप्रतिपादकप्रकरणभेदेऽपि त्वया सृष्टिसंहारादिक्रियाणां अभेदस्याऽङ्गीकृतत्वाच्च।

एतेन जीवेशाविति नामधेयस्याऽपि भेदकत्वं प्रत्याख्यातम्। तस्मात्परस्परविरुद्धधर्मादिमतामवतारादीनामिव जीवानामप्यभेदश्रुत्यनुसरणाय तदत्यन्ताभिन्नवासुदेवांशत्वं त्वया निवारयितुं न शक्यत इति भावः॥ ३२॥

नन्वस्त्वेवं जीवब्रह्मणोरभेदः, तथाऽपि निर्दोषाशेषगुणपूर्णस्य ब्रह्मणो जीवं प्रत्यभेदेऽप्यावृतत्वोपपादनाद्विचार्यत्वं संभवतीति मन्मते शास्त्रमारम्भणीयमिति परसिद्धान्तस्य न किञ्चिद्दूषणमिति मन्दाशङ्कां निराकुर्वन् सिद्धान्तदूषणमुपसंहरति—

१. **अयं भावः**—दर्शपूर्णमासप्रकरणे प्रस्तरप्रहरणाङ्गत्वेन "इदं द्यावापृथिवी भद्रमभूदि" त्यादिना श्रुतो मन्त्रस्सूक्तवाकः। तन्मध्ये "अयं यजमान आयुराशास्ते। सुप्रजास्त्वमाशास्ते" इत्यादिना यजमानस्याऽऽयुरादीनां फलानामाशासनमुक्तम्। तच्च दर्शपूर्णमासाङ्गत्वात्तद्विकृतिषु त्रेताग्निसाध्यास्वेवाऽतिदेशेन गन्तुं शक्नोति; न तु गृह्योक्तकर्मस्वेकाग्निसाध्येषु अपेक्षामात्रेण गन्तुं प्रभवन्ति। न ह्यपेक्षामात्रेणेतरकारणाभावे उपसंहारो युज्यते इति। प्रस्तरो हविरासादनाधारभूतो दर्भमुष्टिविशेषः।

इत्थं जीवब्रह्मभेदे निरस्ते शास्त्रारम्भस्थापनार्थं त्वदिष्टे ।
जीवाभेदेऽप्यावृतत्वाद्विचार्यं ब्रह्मेत्यस्मद्रीतिरेवाऽऽश्रयस्ते ॥ ३३॥

इति श्रीमदप्पयदीक्षितेन्द्रकृतिषु मध्वतन्त्रमुखमर्दने प्रथमाधिकरणदूषणम् ॥

न वयं सर्वथैव ब्रह्ममीमांसाशास्त्रारम्भमाक्षेप्तुं प्रवृत्ताः । अस्माभिस्तदारम्भस्य स्थापनीयत्वात् । किन्तु जीवब्रह्मभेदमाश्रित्य ब्रह्मणो विषयत्वोपपादनेन तदारम्भमाक्षेप्तुम् । तदाक्षेपश्च सुस्थिर एव । त्वद्रीत्यैव जीवब्रह्मभेदस्य निराकृतत्वात् । अतस्तं पक्षं विहाय जीवाभेदेऽप्यावृतत्वात् ब्रह्म विचार्यमिति पक्ष आश्रीयते चेत्; साऽस्मद्रीतिरेव, न दूषणीया । न च सगुणस्यैव ब्रह्मणः परपक्षे जीवाभेदोपपादनाद्रीतिभेदोऽस्तीति शङ्कनीयम् । परमते गुणगुणिनोः भेदाभावाद्भेदप्रतिनिधेस्तदभिमतस्य विशेषस्य वाऽऽवश्यकब्रह्मशक्त्यैवोपपन्नतया निराकृतत्वात् । अस्मन्मतेऽप्यविद्याशक्तिवशाद्गुणगुणिभावप्रतीतेरिष्यमाणत्वात् । यदाहुः (१)**पद्मपादाचार्याः** "आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः पृथक्त्वेऽपि चैतन्यात्पृथगिवाऽवभासन्ते इति । इयांस्तु विशेषः — जीवे प्रत्यक्षतोऽवभासन्ते; ब्रह्मणि तु "आनन्दं ब्रह्मणो विद्वानि" ति श्रुतिबलादवभासन्त" इति । तस्मात्सिद्धमेतज्जीवब्रह्मभेदावलम्बनेन शास्त्रारम्भसमर्थनमयुक्तमिति ॥ ३३ ॥

अप्पदीक्षितसुधीविनिर्मिते मध्वदर्शनमुखावमर्दने ।
आदिमाधिकरणस्य दूषणं भूषणं भवतु धीमताभिदम् ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरीन्द्रसूनोः चतुरधिकशतप्रबन्धनिर्माणचणस्य श्रीमदप्पयदीक्षितेन्द्रस्य कृतिषु मध्वतन्त्रमुखमर्दनव्याख्याने **मध्वमतविध्वंसने** जिज्ञासाधिकरणदूषणाख्यं प्रथमं प्रकरणम् ॥

---

जन्मादिसूत्रे परकीयमिदमधिकरणम्—यदुक्तं "तद्विजिज्ञासस्व । तद्ब्रह्मेति" इति विचारविधिवाक्ये ब्रह्मपदेन जीवविलक्षणस्य ब्रह्मणो विचार्यस्य समर्पणात्सविषयमिदं शास्त्रमिति, तन्न घटते । तत्र ब्रह्मपदस्य जीवपरत्वात् । तथा हि—ब्रह्मशब्दस्ता-

---

१. पंचपादिकायां चतुर्थपत्रीयचतुर्थपंक्तौ ।

वज्जीवस्याऽपि वाचकः। "बृह बृहि वृद्धा" विति धातोरिव बृहजातिजीवकमलासन-शब्दराशिष्विति धातोरपि मनिन्प्रत्यये सति ब्रह्मशब्दस्य निष्पत्तेः। तस्य च जीववाचकत्वं रूढ्यैव जीवे गुणपूर्त्यादियोगासंभवात्। परब्रह्मवाचकत्वं तु योगेन। ततश्च रूढेर्योगतो बलवत्त्वादिह ब्रह्मशब्दस्य जीवपरत्वमेव युक्तमिति पूर्वपक्षे राद्धान्तः—सत्यं रूढिर्बलीयसी। इह त्वस्या बाधकं जागर्ति "यतो वा इमानि भूतानि जायन्ते" इत्यादौ श्रुतं ब्रह्मशब्दनिर्देश्यस्य जगज्जन्मादिकारणत्वं बोधयति। तद्धि विष्ण्वेकनिष्ठं तल्लक्षणमिति श्रुतिस्मृतिपुराणादिभ्योऽवगतम्। अतस्तदनुसारेण योगतः परिपूर्णगुणविष्णुपर एवाऽयं ब्रह्मशब्द इति तत्र पूर्वपक्षोक्ता जीवे रूढिरसिद्धा। शारीरबृंहकत्वादिवल्लतयोगेनैव तत्र वृत्त्युपपत्तेः धात्वन्तरस्य चाऽप्रामाणिकत्वादिति दूषणं स्पष्टमेवेति मत्वा सिद्धान्तं दूषयति—

तद्ब्रह्मेत्यस्य रूढ्या तनुधरपरतामुज्झतोऽन्नत्तययोगात्
किं त्वन्नाद्येषु युक्ता भवति तव मते स्याद्यतो वेत्यनूक्तिः।
ब्रह्मैक्यात्तेषु युक्ता यदि किमिति तदा जीववर्गे न युक्ता
जीवाद्भेदेऽप्यभिन्नानपि हि कथयसि ब्रह्मणा तद्गुणेद्धान्॥३४॥

यदि जगत्कर्तृतानुवादस्य जीवे पर्यवसानायोगाद्विचारविधिवाक्यगतस्य ब्रह्मशब्दस्य रूढ्यर्थोऽपि जीवः परित्यज्यते तदा येष्वन्नप्राणमनोविज्ञानानन्देषु तस्य ब्रह्मशब्दस्य वृत्तिस्तवाऽभिमता तेष्वपि वृत्तिः तस्य परित्यक्तव्या स्यात्। जगत्कारणत्वानुवादपर्यवसानासंभवस्य तेष्वपि तुल्यत्वात्। तथाहि—वरुणेन ब्रह्मविद्यार्थमुपसन्नं भृगुं प्रति जगज्जन्मादिकारणं तद्ब्रह्म तद्विजिज्ञासस्वेत्युपदिष्टे सोऽपि तपस्यवाऽन्नं जगत्कारणं ब्रह्मेत्यवगत्य पुनः पुनरुपसत्त्या क्रमेण प्राणं मनो विज्ञानमानन्दं तथाऽवगतवानिति भृगुवल्ल्यां श्रूयते। तत्र "आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्याद्यानन्दवाक्यमेकमेव प्रथमं सामान्यतो लक्षणामुखेनोपदिष्टस्य ब्रह्मणो निर्णयवाक्यमानन्द एव जगज्जन्मादिमूलकारणं ब्रह्म; अन्नादयस्तु चत्वारोऽपि कोशाः "अन्नं ब्रह्मेति व्यजानात्। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादि स्थूलारुन्धतीन्यायेन प्रवृत्तानि इत्यस्माकं मतम्। तव तु अन्नादिवाक्यानि पञ्चाऽपि तन्निर्णयवाक्यानि अन्नादिषु पञ्चस्वपि ब्रह्मशब्दस्य जगत्कारणत्वलक्षणयोजनस्य च दर्शनात्। पुनःपुनरुपसत्तिस्तु अन्नमयादिकोशान्तरगतानां पञ्चानां ब्रह्मरूपाणां मध्ये पूर्वपूर्वरूपापरोक्षीकरणानन्तरमुत्तरोत्तररूपापरोक्षीकरणार्थतयाऽनुज्ञाप्राप्तये प्रतिपर्यायं "तद्विज्ञाय पुनरेव वरुणं पितरमुपससार" इति "तपसा ब्रह्म विजिज्ञासस्वे"ति च श्रवणादिति मतम्। एवं च तव मते "एतन्नानावताराणां निधानं बीजमव्यय"मित्यादि

पुराणप्रसिद्धेन मूलरूपेणैव ब्रह्मणश्चतुर्मुखादिसकलभूतजातजन्मादिकर्तृत्वम्, न तु प्रतिशरीरं तत्तत्कोशमात्राधिष्ठातृतयाऽभिव्यक्तैरन्नादिरूपैरिति तेष्वप्यनुवादाद्युक्तिस्तुल्यैव । यद्यपि तव मते सर्वाणि भगवद्रूपाणि सविशेषभिन्नानि तथाऽपि तत्तत्कृत्यानि व्यवस्थितान्येव । न हि रावणवधादिकं कंसशिशुपालवधादिकृष्णचरित्रमध्ये वर्ण्यते ।

**स्यादेतत्**—तात्विकाभेददृष्ट्या रूपान्तराविष्कृतोऽपि महिमा रूपान्तरे वर्णयितुं युक्तः । "अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तत" इत्यादिकृष्णवाक्यदर्शनात् । रावणवधादेः कृष्णरूपाविष्कृतचरित्रमात्रसंग्रहप्रस्तावेष्ववर्णनेऽपि सर्वरूपाभिमानिपरब्रह्मस्वरूपतया कृष्णवर्णनप्रस्तावेषु कृष्णेऽपि वर्णनदर्शनाच्च । अतोऽन्नादिरूपेषु मूलरूपाभेददृष्ट्या जगत्कर्तृत्वानुवादो युक्त इति चेत्; एवं तर्हि जीवेऽपि स युक्त एव । जीववर्गोऽपि ज्ञानानन्दादिब्रह्मगुणशालितया ब्रह्माभिन्न इति त्वयाऽङ्गीकृतत्वात् । 'तत्वमसी'ति जीवे प्रकृतजगत्कर्तृभावपरामर्शितत्पदोक्तब्रह्माभेदप्रतिपादनस्य ज्ञानानन्दादिगुणैकरूप्यप्रयुक्ताभेदविषयतया "सर्वं खल्विदं ब्रह्मे"ति ब्रह्मणि सर्वप्रपञ्चाभेदप्रतिपादनस्य "सर्वभूतगुणैर्युक्त"मिति स्मृतेः पृथिव्यादिगताधारत्वादिगुणा ब्रह्मणि सन्तीति तत्तद्गुणैकरूप्यप्रयुक्तपृथिव्याद्यभेदविषयतया च त्वया (१)"तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवदि"ति सूत्रे व्यवस्थापितत्वाच्चेति भावः ॥ ३४ ॥

एवं यतो वेत्यादिनाऽनुवाद्यस्य ब्रह्मणि सतः तदभेददृष्ट्या जीवे वर्णनं युक्तमित्युक्तम् । इदानीं साक्षादपि जीवे तदनुवाद्यत्वं सम्भवतीत्याह—

**यतो वेत्याद्युक्तिः कथमिव च जीवे न घटते ?**
**यतस्तद्ब्रह्मेति श्रुतिरपसरेद्रूढिविषयात् ।**
**जगत्स्रष्टुं सर्वं प्रभवति खलु ध्यानविषयं**
**समस्तोऽयं मानोरथिकमपि जीवस्तव मते ॥३५॥**

इत्थं हि तव मतम्—स्वप्नध्यानमनोराज्येष्वनुभूयमानास्सरित्समुद्रगिरिनगरगजतुरगादयो न बहिस्सन्तः । नाऽपि भ्रान्तिविषयाः । किन्तु स्वप्नादिद्रष्टृपुरुषान्तःकरणगतानादिकालप्रवृत्ततत्तद्विषयानुभवजन्यवासनोपादानाः तदानीमेवाऽन्तरुत्पन्नाः तत्तद्ध्यानमनोरथविषयाः पुरुषप्रयत्ननिर्वर्त्याः, न तु स्वप्नविषया इति । तदुक्तं **न्यायसुधायां** (२)"सन्ध्ये सृष्टिराह ही" त्यधिकरणे—यथा मनोरथे ध्याने च

१. वे० सू० २. ३. २९. । २. वे० सू० ३. २. १. अधि. १ ।

संस्कारयोनीनर्थान् मनसाऽनुभवत्येवं स्वप्नेऽपीति किमनुपपन्नम् ? इयांस्तु विशेषः—मनोरथादौ प्रयत्नपूर्विका पदार्थसृष्टिः। स्वप्ने पुनरीश्वरेच्छाधीनैवेति। तथैव प्रथमसूत्रेऽपि ध्यानं मानसक्रियेति शङ्कानिराकरणार्थमुक्तम्। यदि क्रियापरिस्पन्दः स तर्हि अतीन्द्रियाश्रितोऽतीन्द्रिय इत्यपरोक्षावभासविरोधः। रूपरहितत्वेन तदवभासविरोधश्च। यदि च मानसी सृष्टिरिति मतम्, अनुमतमेव तत्। श्रवणदर्शनादिजनितमानसवासनामयस्य वस्तुनो मनसाऽवलोकनं ध्यानमित्यङ्गीकारात्। अतीन्द्रियोपादानकस्याऽपि द्रव्यस्यैन्द्रियकत्वं त्र्यणुकादेरिवोपपद्यते। नीरूपाद्वायोः रूपवतस्तेजसो जन्म वेदान्तिनां प्रसिद्धमेवेति। एवं ध्यानमनोरथयोरसंभावितो विषयः कोऽपि नास्तीति तद्विषयसर्वस्रष्टरि जीवे साक्षादप्यनुवाद्यान्वयस्संभवतीति भावः॥ ३५॥

ननु "यतो वा इमानी"ति निर्देशाद्वक्तृश्रोतृसाधारणस्थूलप्रपञ्चस्रष्टृत्वमनुवाद्यम्। तत्तु न जीवे सम्भवतीत्याशङ्क्याऽऽह—

**स्थूलप्रपञ्चो यदि चाऽनुवाद्यस्सोऽप्यस्तु ते ध्यानमनोरथोत्थः।**
**सन्त्येव तत्र ह्यतिदुर्घटानि सर्वापरोक्ष्यादिषु को विरोधः? ॥३६॥**

स्थूलप्रपञ्चस्रष्टृत्वमपि जीवस्य संभवति। तस्य चिरन्तनहिरण्यगर्भादिजीवध्यानमनोरथप्रभवत्वोपपत्तेः। न चेश्वरस्य स्रष्टृत्वश्रुतिविरोधः। तस्याऽपि प्रपञ्चान्तरस्रष्टृत्वेन घटादिष्विव ध्यानजादिष्वपि स्रष्टृत्वेन च तदुपपत्तेः। न च वासनामयत्वेन सर्वापरोक्ष्यसर्वार्थक्रियाकारित्वादिविरोधः। अतिसूक्ष्मवासनोपादानत्वेऽपि स्वप्नध्यानमनोरथविषयाणां भूगोलकमहार्णवादीनां अतिमहत्वं तेषां च स्वल्पशरीरान्तरवस्थानं मूहूर्तमात्रावस्थितेषु स्वप्नध्यानमनोराज्येषु अनेकशतवर्षातिवाहनमित्यादेरतिदुर्घटस्य दर्शनेन तद्वदेव ध्यानमनोरथप्रभवे प्रपञ्चे सर्वापरोक्ष्यादेरप्यविरोधात्। **वासिष्ठरामायणे** भार्गवनन्दनमनोराज्यादिविषयप्रपञ्चेषु सर्वापरोक्ष्यादेर्वर्णितत्वेन मनोराज्यादिषु सृष्टिमङ्गीकुर्वतस्तव तदनुसरणौचित्याच्चेति भावः॥३६॥

नन्विदं जीवेऽनुवाद्यसमर्थनप्रकारद्वयमप्ययुक्तम्। आद्ये हि प्रकारे महावाक्यार्थो गौणः। द्वितीये त्वनुवाद्यपरावान्तरवाक्यार्थः। तथा हि—ब्रह्मपदस्य जीवपरत्वे परजीवयोरभेदो महावाक्यार्थः। स च जगज्जन्मादिकारणत्वजीवत्वावच्छिन्नयोश्चेन्मुख्यो भवति। स च न संभवति। ताभ्यां रूपाभ्यां तयोर्भेदाङ्गीकारात्। यस्तु ज्ञानानन्दवत्त्वादिरूपेणाऽभेदः संभवतीत्युक्तः स तु गौणः शब्दानुपात्तधर्मावच्छिन्नत्वात्। अत एव प्रबलश्रुतिभिः भेदसिद्धेः तत्वमसिवाक्यं गौणाभेदपरमित्येव (१)"तद्गुणसारत्वादि" सूत्रे

---

१. ब्र० सू० २, ३, २९.

दर्शितम् । न चेह तथा गौणो वाक्यार्थः स्वीकार्यः । ब्रह्मपदमात्रस्य योगेन परब्रह्मपरत्वे मुख्यवाक्यार्थलाभात् । एवं जगत्कारणत्वमनुवाद्यपरोऽवान्तरवाक्यार्थः । तच्चाऽसंकुचितं वेदप्रसिद्धं च ग्राह्यं बलवत्संकोचाभावात् । वेदप्रसिद्धसत्वे तस्यैव वेदेनाऽनुवदितुं युक्तत्वात् । न च जीवानां ध्यानमनोरथादिविषयस्रष्टृत्वमसंकुचितम् । जीवान्तरध्यानादिविषये जीवान्तरस्य स्रष्टृत्वाभावात् । नाऽपि "तत्तेजोऽसृजत" इत्यादिवत् तद्वेदप्रसिद्धम् । न च ब्रह्मपदमात्रस्य रूढित्यागेन मुख्यानुवाद्यग्रहणसंभवेन त्यागो युक्त इत्याशंक्याऽऽह—

**यद्येवं रोचयेथाः कथमपि न गतिं स्वेष्टिसंसिद्धिबुध्या**
**लब्धुं ते वृद्धिमृद्धां ध्रुवमभिलषतो मूलमेव प्रणश्येत् ।**
**अत्यन्ताभेद एवं परतनुधरयोरापतेत्तद्विरोधे**
**राजन्योक्त्यादिरीत्या बत विपरिणमेद्बाध्यमत्राऽनुवाद्यम् ॥३७॥**

जीवे कथंचिद्योजितमिदं प्रकारद्वयमपि ब्रह्मपदरूढित्यागेन स्वेष्टं लब्धव्यमिति लोभाद्यदि न रोचयेथास्तदा वृद्धिमृच्छतो मूलमपि नष्टमिति न्याय एवाऽऽपतेत् । उक्तप्रकारद्वयानङ्गीकारे हि अनुवादब्रह्मपदस्वारस्यविषययोः जीवपरयोः विरुद्धधर्मवत्तया ताभ्यामुपस्थितयोरपि यतो वेत्यादिमहावाक्यप्रामाण्यादत्यन्ताभेदः प्राप्नोति । विरुद्धधर्मवत्वस्य तयोरभेदाविरोधिताया: प्रथमाधिकरणभङ्गे प्रपञ्चितत्वात् । अविरोधे च मुख्यार्थत्वायोगात् । यदि तु तस्य भेदविरोधित्वमेवेत्यभिमानस्तदाऽत्यन्तमेव तत्र मूलहानिः । तदा हि विधेयानुवाद्यरूपतया जीवब्रह्मसमर्पकस्य भागद्वयस्य महावाक्यार्थभूताभेदपरिपन्थिधर्मद्वयोपस्थापकतया विरोधे सत्यविरोधाय कस्यचिद्भागस्याऽर्थबोधे कर्तव्ये विधेयभागस्य तात्पर्यवत्तया प्रबलत्वात् । न विधौ परश्शब्दार्थ इत्यनुवादस्य मुख्यतासिद्धये विधावमुख्यार्थपरिग्रहस्य न्यायविद्भिर्निराकृतत्वाच्च । अनुवादभागस्यैवाऽर्थबाधः प्राप्नुवन्जीवगतध्यानादिविषयस्रष्टृतागोचरत्वलक्षणस्य सङ्कोचरूपबाधस्य त्वदसंमततया गत्यन्तराभावाद्ब्रह्मण्येवाऽनुवाद्ये जीवाभेदपरिपन्थिजगत्कारणत्वोपमर्दात्मा स बाधः प्राप्नोति । दृष्टं च **पूर्वतन्त्रेऽपि** अनुवाद्यगतधर्मस्य विधेयविरोधेनोपमर्दः । तत्र हि (१)"उक्थ्याग्निष्टोमस्तुतशस्त्रं स्यात् सति हि संस्थान्यत्वम्" इत्यधिकरणे (२) "अप्यग्निष्टोमे राजन्यस्य

१. जै. सू. अ. १० पा. ५ अधि. १२ सू. ४९ ।

२. **अयमत्र विषयः**—चतस्रस्सोमसंस्थाः अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रश्चेति । अग्निष्टोमसाम्ना यः क्रतुस्समाप्यते, अर्थाद्यस्मिन्क्रतौ अन्तिमं स्तोत्रं

गृह्णीयात् अप्युक्थ्य" इति राजकर्तृकयोरुक्थ्याग्निष्टोमयोर्विधीयमानः षोडशिग्रहः स्तुतशस्त्ररहितस्स्यात् । तद्वत्त्वे षोडशिसंस्थतयोक्थ्याग्निष्टोमसंस्थाभंगप्रसंगेनोक्थ्यस्याऽग्निष्टोमस्य च सतः षोडशिग्रहविध्ययोगादिति पूर्वपक्षं कृत्वा सिद्धान्तितम्-स्तुतशस्त्रवत्वेन निर्ज्ञातषोडशिग्रहोऽत्र विधीयमानस्तथैव प्राप्नोति । न च संस्थाभङ्गो दोषः । पूर्वसंस्थोपमर्देन संस्थान्तरविध्युपपत्तेः ।

(१)"उक्थ्यसंस्थो हि यः प्रातस्तथाऽग्निष्टोमसंस्थकः ।
राजन्यस्य तथा नाऽसौ किन्तु षोडशिसंस्थकः ॥

इत्येव विधेः पर्यवसानादिति । एवं षोडशिग्रहविध्यर्थप्राप्तेनाऽपि स्तोत्रशस्त्रेण यदा तद्विरोधिनोरनुवाद्ययोरुक्थ्याग्निष्टोमसंस्थयोरुपमर्दः तदा किमु वक्तव्यं साक्षाद्विधीयमानेन जीवत्वेन तद्विरुद्धस्याऽनुवाद्यस्य जगत्कारणत्वस्योपमर्द इति । एवं पूर्वोक्तप्रकारद्वयानङ्गीकारे जीवपरयोरत्यन्ताभेदप्रसक्तया त्वदभिमतभेदहानाद्विरुद्धधर्मवतोरत्यन्ताभेदो न संभवतीत्यनुशये ब्रह्मणो जगत्कारणत्वस्याऽपि हानात्त्वन्मतस्य मूलहानिरेव स्यादिति भावः ॥ ३७ ॥

**स्यादेतत्**—विरुद्धधर्मवतोरत्यन्ताभेदो न संभवत्येव । तथाऽपि नोक्थ्याग्नि-

अग्निष्टोमाख्यं न ततः परं स्तोत्रमस्ति सोऽग्निष्टोमसंस्थाकः क्रतुः अग्निष्टोम इत्युच्यते । अग्निष्टोमानन्तरं त्रीण्युक्थ्यस्तोत्राणि पठित्वा क्रतुस्समाप्यते स उक्थ्यः । उक्थ्यस्तोत्रानन्तरं यत्र षोडशाख्येन स्तोत्रेण समाप्तिः स षोडशिसंस्थाकः क्रतुष्षोडशीत्युच्यते । तदनन्तरं यत्र रात्रिसंज्ञकानि त्रीणि स्तोत्राणि वर्धन्ते सोऽतिरात्रः । अग्निष्टोमक्रतावेवाऽग्निष्टोमस्तोत्रानन्तरमुक्थ्यस्तोत्रमकृत्वा षोडशिस्तोत्रं क्रियते सोऽत्यग्निष्टोमो राजन्यकर्तृकः । एवं च राजन्यकर्तृके तस्मिन्नग्निष्टोमे षोडशिग्रहो यदा गृह्यते तदा तदङ्गत्वेन स्तोत्रशस्त्रे अपि कर्तव्ये वा न वेति संशये स्तोत्रशस्त्रयोरपि करणे षोडशिसंस्थाकत्वापत्याऽग्निष्टोमसंस्थाकत्वं भज्येत । तदा तस्याऽग्निष्टोमशब्देन श्रुतावनुवादो न घटेत । अतश्च स्तोत्रमकृत्वा केवलं षोडशिग्रहस्यैव ग्रहणम् । एवं 'अप्युक्थ्ये' इत्यत्राऽपि द्रष्टव्यमिति प्राप्ते—अग्निष्टोमोक्थ्यशब्दाभ्यां तत्तत्संस्थाकक्रतुमनूद्य तत्तत्स्तोत्रोपमर्देनैव षोडशिस्तोत्रं विधीयते । अतश्चाऽग्निष्टोमसंस्थाकः उक्थ्यसंस्थाकश्च यः क्रतुस्स राजन्यस्य न तत्संस्थाको भवितुमर्हति । किन्तु षोडशिसंस्थाक एव इति तद्वाक्यार्थः । अतस्स्तुतशस्त्रे अपि कर्तव्ये एवेति । एवं चाऽनुवाद्यगताग्निष्टोमसंस्थायाः विधेयषोडशिसंस्थानुरोधेनोपमर्दः कृतः । एवं साक्षाद्विधीयमानेन जीवत्वेन तद्विरुद्धस्य जगत्कारणत्वस्याऽनुवाद्यगतस्योपमर्दो भवितुमर्हति । इति ।

१. कारिकेयं तस्मिन्नेवाऽधिकरणे शास्त्रदीपिकायाम् ।

ष्टोमन्यायेन जगत्कारणत्वबाधप्रसक्तिः तन्न्यायवैषम्यात् । राजन्ये प्राप्तयोरुक्थ्याग्निसंस्थयोर्बाधेऽपि हि न तदनुबन्धिविधीनामत्यन्तबाधः; वर्णान्तरे चरितार्थत्वात् । ब्रह्मणि जगत्कारणत्वबाधे तु सृष्टिप्रलयादिवाक्यानामत्यन्तबाधस्स्यात् । विषयान्तराभावात् । तस्मा "दानर्थक्यप्रतिहतानां विपरीतं बलाबलमि"ति न्यायाद्विधेयपरस्याऽपि ब्रह्मशब्दस्य रूढित्यागो लभ्यत इत्याशयवतीमाशङ्कामुद्भाव्य परिहरति—

**उक्थ्याग्निष्टोमसंस्थापरिकरविधयो विप्रजाताविवैते**
**सर्वे स्रष्टृत्ववादाः परपरिपठिताः सन्तु कस्मिन् कृतार्थाः ।**
**तत्रैवाऽरोपबाधद्वितयमनुभवं त्वद्द्वितीयत्वसिध्यै**
**चित्याग्नावग्निहोत्रे विधय इव पयःशस्तये जर्तिलादेः ॥३८॥**

सृष्ट्यादिवाक्यानां विषयान्तराभावो न दोषः । ब्रह्मणोऽद्वितीयत्वसिध्यर्थं "अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रसिध्यति" इत्युक्तरीत्या ब्रह्मणि कर्तव्यप्रपञ्चापवादापेक्षितेन तदारोपेण चारितार्थ्यात् । दृष्टं च **पूर्वतन्त्रेऽपि** प्रयोजनान्तरसिध्यर्थार्थवादापेक्षितारोपमात्रेण चारितार्थ्यमग्निचयनेऽग्निहोत्रे च जर्तिलयवाग्वादिविधिषु(१) । तद्वदिहापि स्यादित्यर्थः ॥ ३८ ॥

**स्यादेतत्**—एकस्य ब्रह्मपदस्य रूढिपरिपालनाय यतो वेत्याद्यनुवादस्य तत्पुरोवादानां सृष्ट्यादिवाक्यानाञ्चैवमुपमर्दकल्पनमयुक्तमित्याशङ्क्याऽऽह—

**तद्ब्रह्मेत्येक एव प्रभवति निखिलस्रष्टृतावादबृन्दं**
**विष्णोर्नानाश्रुतिस्थं विधिरपवदितुं त्वन्मते पूर्वरीत्या ।**
**सर्वाद्वैतश्रुतिभ्यो यदि हि स बलवान्यौगिके ब्रह्मशब्दे**
**सर्वद्वैतश्रुतिभ्यः कथमिव न भवेत्तत्र रूढिं प्रपन्ने ॥३९॥**

१. **अयंभावः**—अग्निहोत्रप्रकरणे "जर्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा, न ग्राम्यान्पशून्हिनस्ति, नाऽऽरण्यान्, अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च पयसाऽग्निहोत्रञ्जुहोति" इति श्रुतम् । एवं चयनप्रकरणेऽपि श्रुतम् । तत्रोभयत्राऽपि जर्तिलानां गवीधुकानां च होमद्रव्यत्वेन विधिश्श्रुतः । स न तेषां होमीयद्रव्यत्वबोधनार्थः । अग्रे 'अनाहुतिर्वै' इति वाक्येन तेषां होमसाधनत्वनिषेधात् । किन्तु 'पयसाऽग्निहोत्रं जुहोती'त्यनेन होमसाधनत्वेन विहितस्य पयसः स्तुत्यर्थं पूर्ववाक्ये जर्तिलानां गवीधुकानां च होमसाधनत्वमारोप्य पुनर्निषिध्यते । तावतैवाऽर्थवादस्य चारितार्थ्यम् । एवमिहाऽपीति ।

सत्यम् एकानुरोधेन बहूनामुपमर्दो न युक्त इति । स तु न्यायस्त्वया तद्ब्रह्मेत्यत्र ब्रह्मशब्दे त्यक्तः । त्वया हि पूर्वाधिकरणे ब्रह्मशब्दस्य जीवब्रह्मभेदसाधकत्वमङ्गीकृत्य तेनैकेन पूर्वपराभिमतसकलाद्वैतश्रुतीनां बाधो वर्णितः । तद्रीत्यैवाऽत्र वक्तुं शक्यम् । तेनैव ब्रह्मशब्देन जीवे रूढिं न्यायतः प्राप्तेन जगत्कारणब्रह्माभेदबोधनपर्यन्तेन सृष्टिवाक्यादिसर्वद्वैतश्रुतीनामुपमर्द इति । न ह्ययं ब्रह्मशब्दो यौगिकत्वे बलवान्, न तु रूढत्व इति वक्तुं युक्तमित्यर्थः ॥ ३९ ॥

एवं विरुद्धगुणवत्त्वं न भेदविरोधीति परोक्त्यनुसारेण तथा सत्यनुवाद्यगतविरुद्धगुणवत्वस्यैवोपमर्दस्स्यात् । न तु विधेयस्याऽभेदस्येत्यापादितम् (१)। **वस्तुतस्तु** परमते जीवब्रह्मणोः विरुद्धधर्मवतोरप्यभेदबोधने लौकिकविरोधदृष्टिर्न परिपन्थिनी । तन्मते परमेश्वरस्याऽचिन्त्याद्भुतशक्तिमहिम्ना विरोधसमाधानादिति प्रथमाधिकरणदूषणे प्रपञ्चितमेव । अधुना तमेवाऽर्थं युक्त्यन्तरेणाऽपि स्थापयति—

**किञ्च श्रुत्येकगम्ये रव इव रसनं साधनं बाधकं वा**
**कर्तुं शक्तं न मानान्तरमखिलजगत्कर्तरीति स्वरीतिः ।**
**(२) स्मृत्यारूढा कथं न व्यपगमयतिते लोकदृष्ट्या निरूढा-**
**मेकत्वायोगशङ्कां परतनुधरयोः वल्गसि त्वं यथैव ॥४०॥**

## इति श्रीमदप्पयदीक्षितकृतिषु मध्वतन्त्रमुखमर्दने द्वितीयाधिकरणदूषणम् ।

श्रोत्रैकगम्ये शब्दे रसनस्येव वेदैकगम्ये ब्रह्मणि मानान्तरस्य साधकत्ववद्बाधकत्वमपि नाऽस्तीति त्वन्मतमर्यादा । सा च(३) "श्रुतेस्तु शब्दमूलत्वादि"त्यधिकरणे त्वया दर्शिता । इत्थं किल तदधिकरणम्—ईश्वरो जगत्कर्ता चेत् क्षुद्रकार्येषु कृत्स्नशक्त्या प्रवर्तते ? तदेकदेशेन वा ? नाऽऽद्यः । क्षुद्रकार्येष्वपि कृत्स्नशक्त्यप्रवृत्तौ तस्य प्रेक्षावत्वहानिप्रसङ्गात् । न द्वितीयः; तस्य निरवयत्वात् । तस्माज्जीवस्य स्वतन्त्रकर्तृत्वे यदुक्तं कृत्स्नप्रसक्त्यादिदूषणं तदीश्वरस्य स्वतन्त्रकर्तृत्वेऽपि तुल्यम् । न चेश्वरस्य निरवयवत्वेऽपि सांशतया बहुत्वशालित्वादेकदेशेन कर्तृत्वोपपत्तिः । (४)"व्यतिरेको गन्धादिवदि" त्यधिकरणे जीवानामपि सांशतायाः स्थापितत्वेन तौल्याज्जीवस्यांऽशांशिभावेन बहुत्वाङ्गीकारे बहुत्वस्य भेदव्याप्तत्वेन भेदस्याऽपि प्रसक्त्या

१. आपतितमिति ग. पु. । २. श्रुत्यरूढेति ख. पु. । ३. वे. सू. २. १. २८. । ४. वे. सू. २. ३. २७. उपपादितमिदं २३ श्लोकटिप्पण्याम् ।

पुनरपि स एव निरवयवत्वशब्दव्याकोप इति तदाक्षेपे ईश्वरेऽपि तथैवाऽऽक्षेपसंभवात् विशेषवशादीश्वरस्यांऽशांशिभावसंभवेन बहुत्वोपपादने जीवेऽपि तथैव तदुपपादनसंभवाच्च । भेदेनोपपादनीयस्यांऽशांशितया बहुत्वस्य चेतने विशेषेणोपपादने घटादावचेतनेऽपि तेनैवोपपादनप्रसङ्ग इति तदाक्षेपस्य परमेश्वरसाधारण्यादिति प्राप्ते राद्धान्तः—वेदैकगम्ये ब्रह्मणि यथाश्रुति यस्य कस्यचिदर्थस्याऽङ्गीकारे लौकिकाश्शुष्कतर्का न प्रतिभटीभवितुमीशते । न हि श्रोत्रैकगम्ये शब्दे चक्षुरादिकं साधकं बाधकं वा भवितुमर्हति । अत एव "योऽसौ विरुद्धोऽविरुद्धो मनुरमनुर्वागवागिन्द्रोऽनिन्द्रः प्रवृत्तिरप्रवृत्तिरपरः परमात्मे" ति श्रुतिरेव लोकदृष्ट्या विरुद्धानामपि धर्माणां परमात्मन्यविरोधं बोधयति । तस्मान्मानान्तरगम्यस्य जीवस्य स्वतन्त्रकर्तृत्वाङ्गीकार एव कृत्स्नप्रसक्त्यादिलौकिकतर्काः प्रवर्तेरन् नेश्वरस्येति यथाश्रुतिनिरवयवोऽपि परमेश्वरः कार्यानुरूपमेकदेशेन जगन्निर्माणे प्रवर्तते । जीवेनाऽपि निरवयवेनैव कार्यानुरूपमेकदेशेन कृत्स्नशक्त्या वा कारयतीत्यभ्युपगतौ न कश्चिद्दोष इति ।

एवमीश्वरस्य तर्कागोचरत्वेन तस्मिन्निरवयवत्वैकदेशकर्तृत्वयोर्विरोधमपह्नुवानः कथं तस्य जीवाभेदे तर्कागोचरत्वं विस्मरसि ? येन तत्र लौकिकविरोधमूलान् पुनः पुनश्शुष्कतर्कानेवोद्घाटयसि । न च नैते शुष्कतर्काः, किन्तु जीवब्रह्मभेदाभेदश्रुत्योर्विरोधे भेदश्रुतिप्राबल्योपपादकतया वाक्यार्थनिर्णायकश्रुत्यनुग्राहकतर्का एव । न च तेऽप्युपेक्षणीयाः । मीमांसावैयर्थ्यापत्तेः । तत्रैव (१)"श्रुतेस्तु शब्दमूलत्वादि" ति मदीयाधिकरणे

(२) यद्वाक्योक्तं न तद्युक्तिर्विरोद्धुं शक्नुयात्क्वचित् ।
विरोधे वाक्ययोः क्वाऽपि किञ्चित्साहाय्यकारणम् ॥

इति स्मृतिमुदाहृत्य वाक्यार्थनिर्णायकतर्काणामुपादेयताप्रतिपादनाच्चेति वाच्यम् । तथा सति जीवब्रह्मभेदश्रुत्यनुग्राहकत्वेन त्वदभिमतानां विरुद्धधर्मवत्वमूलकतर्काणामपवादकत्वेन तदभेदश्रुतिप्राबल्यापादका जीवे प्रत्यक्षसिद्धकर्मकर्तृत्वस्य ब्रह्मणि श्रुतिप्राप्तसृष्टिपालनसंहारादिकर्तृत्वस्य च प्रतिक्षेपकतया कर्तृत्वविशेषतदनुबन्धिगुणरूपान् जीवब्रह्मणोः सर्वानपि धर्मान् विचारासहान् मिथ्याभूतान्कुर्वन्तः कृत्स्नप्रसक्त्यादितर्का एव श्रुत्यनुग्राहका इत्युपादेयाः । विरुद्धधर्मवत्वमूलतर्कास्तु तदपोदिततया श्रुत्यनुग्राहकाः शुष्कतर्का उपेक्षणीया इति वैपरीत्यस्यैवाऽऽपत्तेः । तस्माद्ब्रह्मणः तर्कमात्रागोचरत्वाङ्गीकारे शुष्कतर्कागोचरत्वाङ्गीकारे च विरुद्धगुणवत्वमूलतर्कागोचरत्वमवश्यं-

१. वे. सू. २. ३. २८. । २. कारिकेयं पुरुषोत्तमतन्त्रीयत्वेन मध्वभाष्ये उदाहृता ॥

भावि । ब्रह्मणस्तर्कागोचरत्वनिर्वाहाय त्वदुदाहृतश्रुतावपि हि इन्द्रोऽनिन्द्र इत्यपरः परमात्मेति च तस्याऽनीश्वरत्वावरत्वरूपविरुद्धधर्मवताऽपि जीवेनाऽभेदनिर्देशो दृश्यते । तेनाऽपि तस्य विरुद्धगुणवत्वमूलकजीवाभेदप्रतिक्षेपकतर्कागोचरत्वं स्पष्टमेव । अतो न तानुपादाय पुनः पुनर्वल्गनं युक्तमिति भावः ।

तस्मात्पूर्वपक्षे त्वयाऽङ्गीकृता ब्रह्मपदस्य रूढिः कथमपि सिद्धान्ते त्याजयितुं न शक्यत इति जन्मादिसूत्रसिद्धान्तोऽपि तवाऽसमञ्जस इति सिद्धम् ॥ ४० ॥

इत्यप्पदीक्षितकृतौ मध्वमतारम्भमर्दनग्रन्थे ।
द्वितीयाङ्काधिकृते दूषणमस्तु त्रयीविदां प्रीत्यै ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजि श्रीरङ्गराजाध्वरीन्द्रसूनोः चतुरधिकशतप्रबन्धनिर्माणचणस्य श्रीमदप्पयदीक्षितेन्द्रस्य कृतिषु मध्वतन्त्रमुखमर्दनव्याख्याने **मध्वमतविध्वंसने** जन्माद्यधिकरणदूषणाख्यं द्वितीयं प्रकरणम् ॥

---

(१) "शास्त्रयोनित्वादि"ति, सूत्रे परस्येत्थमधिकरणम्—यदुक्तं जगज्जन्मादिकारणत्वं विष्ण्वेकनिष्ठं तल्लक्षणमिति, तन्न युक्तम् । जगदनेककर्तृकं, महाकार्यत्वात् । शिवो जगत्कारणम्, सर्वज्ञत्वात्; तत एव विरिञ्चोऽपि जगत्कारणम् । न च हेत्वसिद्धिः । शिवस्य सर्वज्ञनाम्ना विरिञ्चस्य "ज्ञानमप्रतिघं यस्ये"त्यादि स्मृत्या च तत्सिद्धेरित्याद्यनुमानैरन्यत्राऽपि जगत्कारणत्वावधारणादिति चेत्; जगत्कारणत्वस्य धर्मादिवच्छास्त्रप्रमाणकत्वात् । शास्त्रस्य विष्ण्वेकनिष्ठजगत्कारणत्वप्रतिपादकत्वादनुमानस्य संभवदुपाधिप्रत्यनुमानादिदोषशङ्काकलङ्कितस्याऽदृष्टार्थे स्वतो निश्चायकत्वाभावादिति । तत्र परमते शास्त्रमर्यादयाऽपि जगतोऽनेककर्तृकत्वमापतति । तथा तत्तात्पर्यनिर्णायकोपपत्तिरूपलिङ्गतयोदाहृतानुमानानामेव तदनुग्राहकत्वसंभवात् । अतस्तेषां दूषणमयुक्तमित्याह—

**कथं निरस्या कथय त्वयाऽनुमा प्रसाधयन्तीदमनेककर्तृकम् ।**
**तथैव तात्पर्यमपि श्रुतेर्हि सा नयेत्तदैकार्थ्यनयत्यजस्तव ॥ ४२ ॥**

त्वन्मते हि एकस्य श्रुतिवाक्यस्यैक एवाऽर्थ इति नाऽस्ति नियमः । अत'स्सदेव सोम्येदमग्र आसीत्' इत्यादिसृष्टिवाक्यानामप्यनेकसृष्टिपरत्वं सम्भवति । ततश्च यदि जगतः सामान्यतोऽनेककर्तृकत्वसाधकानुमानं विशिष्य ब्रह्मविष्णुशिवकर्तृकसाधकानुमानानि चेति तथा तात्पर्यनिर्णायकान्युपपत्तिरूपतात्पर्यलिङ्गान्यवतरेयुः । तदा तत

१. वे. सू. १. १. ३. ।

एवाऽऽपतत्सृष्टिवाक्यानामनेक(१)कर्तृ(२)परत्वं दुर्वारम् । एवं च जगत्कारणे वस्तुनि साक्षादनिर्णायकान्यप्यनुमानानि तात्पर्यलिङ्गतया "तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छे" त्यादिश्रुतिदर्शितानुमानवत्तन्निर्णयोपयोगीनीति कथं त्वया निराकर्तुं शक्यन्त इत्यर्थः ॥ ४१ ॥

परमते श्रुतिवाक्यानां एकार्थत्वनियमाभावमेव तदङ्गीकृतानेकार्थश्रुत्युदाहरणै-र्दर्शयति—

**कर्मब्रह्मोभयार्थं खलु सकलमपि व्याकरोः कर्मकाण्डं**
**ब्रह्मस्वार्थोभयार्थानुपनिषदुदितानप्यतद्वाचिशब्दान् ।**
**अन्यांश्चोमादिवागाद्युभयविधपरान्वाङ्मनःप्राणमुख्यान्**
**केन स्याद्वाक्यमर्थत्रयपरममितार्थं च बह्वृचादिसूक्तम् ॥४२॥**

(३)"ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके" इत्यधिकरणे तावत्कृत्स्नः कर्म-काण्डस्त्वया कर्मब्रह्मोभयपरतया व्याख्यातः। उदाहृतं च तत्र तस्य ब्रह्मपरत्वं स्थालीपुलाकन्यायेन केषुचिद्वाक्येषु । तत्र वसन्तवाक्येषु यथा—(४)वसतीति वसः । पचाद्यच् । तनोतीति तिः । औणादिको डिप्रत्ययः । पूर्वपदस्य च नकारागमः । वसंश्चासौ तिश्चेति वसन्तिः । सर्वत्र व्याप्तो वर्तमानो जगत्कर्ता चेत्यर्थः । तत्र सम्बुद्धिर्वसन्ते । द्विरुक्तिरादरार्था । जिर्जातम् । पूर्ववज्जनेर्डिप्रत्ययः । ओतिरोतम् । अवतेः क्तिः । जातं जगत् ओतं प्रविष्टं यस्मिन्स ज्योतिः । षः प्राणः । चेष्टकत्वात्, "षकारः प्राण आत्मे"ति श्रुतिः । ज्योतिश्चाऽसौ षश्चेति ज्योतिषः । तस्य सम्बुद्धिर्ज्यो तिषेति । आयजेतेत्यपि सम्बुद्धिः । आसमन्ताद्यजैर्यज्वभिः इत प्राप्तेत्यर्थः । यजेर्घञर्थे कविधानमिति कप्रत्ययः । सम्प्रसारणाभावश्छान्दसः । "इन्द्र आगच्छे"त्यत्र इन्द्रेति आ इति गच्छेति संबोधनानि । गमेश्छदेश्च डप्रत्यये सति गं गतं छं छादनं यस्मा-दसौ गच्छः । निरवद्य इत्यर्थः । स्वाहाशब्दे स्वमात्मीयं यज्ञादिषु दत्तं हविरादि आहरति स्वीकुरुत इति स्वाहः । हृञो डप्रत्ययः । तदनन्तरं "अ" इति विष्णुनाम । तयोस्समासे सम्बुद्धिः । नमश्शब्दे नमतेरधिकरणार्थेऽसुन्प्रत्ययः । नमन्ति नियमेना-ऽस्मिन्वर्तन्ते कल्याणगुणा इत्यर्थ इति । एवं बहुषु स्थलेषूदाहृतानि, विस्तरभयान्न लिख्यन्ते । तथोपनिषत्स्वपि अब्रह्मवाचिशब्दा ब्रह्मस्वार्थोभयपरतया व्याख्याताः । तद्यथा "प्राणो वा आशाया भूयानि"ति प्रकरणे प्राणशब्दो भूमाधिकरणे ब्रह्मपरतया

---

१. अनेककर्तृकत्वमिति ग. पु. । २. परत्वमिति ग. पु. नास्ति । ३. वे. सू. १. ४. १०. अ. २ । ४. इदं न्यायसुधायां १८१ पत्रे १ पुटे ८ मपङ्क्ति-मारभ्योच्यते ।

(१)व्यतीहाराधिकरणे मुख्यप्राणतया च भाष्ये व्याकृतः । उक्तार्थद्वयपरमिदं प्रकरणमिति च टीकायामुक्तम् । तथा "इन्द्रियेभ्यः परा ह्यर्था" इत्यादीनां तदधीनत्वन्यायेन ब्रह्मणि समन्वय उक्तः । इन्द्रियशब्दप्रवृत्तिनिमित्तस्येन्द्रवत्वस्य ब्रह्माधीनत्वादिन्द्रियशब्दो ब्रह्मपरः । इन्द्रियगतपरत्वावधित्वस्य पञ्चम्यर्थस्य ब्रह्माधीनत्वात् पञ्चम्यपि ब्रह्मपरेत्यादिप्रकारेणेन्द्रियदेवता तदुत्कर्षक्रमप्रतिपादकत्वं च तेषामङ्गीकृतम् । एवमन्यान्यपि भूयांस्युदाहरणानि । "वाङ्मनसि सम्पद्यते, मनः प्राणे, "प्राणस्तेजसि" इत्यादिवाक्ये वाङ्मनःप्राणशब्दनां उत्तरोत्तरस्मिंल्लीयमानो मारुतो हिरण्यगर्भपर इति मृतावुत्तरस्मिंल्लीयमानवागिन्द्रियादिपरा इति चाऽनेकार्थता (२)"वाङ्मनसि दर्शनादि"त्यधिकरणे दर्शिता । "केन स्याद्येन स्यात्तेनेदृश एवे"ति बृहदारण्यकवाक्यं ज्ञानिनो विहितनिषिद्धसाधारण्येन नियन्त्रणयथेष्टाचरणविधिपरमिति, विहितमध्य एव केषाञ्चिदाचरणं केषाञ्चित्परित्याग इत्येतदनुज्ञापरमिति, सर्वमपि विहितमेव कर्म विधिबन्धं विना स्वेच्छया कार्यमित्येवं परमिति चाऽर्थत्रयशालि । अर्थत्रयस्य च हिरण्यगर्भतदितरदेवतामनुष्यविषयत्वेनाऽविरोध इति (३)"स्तुतयेऽनुमितिर्वे"त्यधिकरणे निरूपितम् । ब्रह्मादिदेवताप्रतिपादकाः सूक्तमन्त्राः तत्तदुत्तमसकल-

१. वे. सू. व्यतिहारो विशिंषंति हीतरवत् ३. ३. ३८. अ. २२. उत्तमत्वं हि देवानां मुक्तावपि हि मानवात् । तेभ्यः प्राणस्य तस्माच्च नित्यमुक्तस्य वै हरेरिति बृहत्तन्त्रे इति भाष्येण प्राणशब्दस्य मुख्यप्राणत्वप्रतिपादनादिति ( मध्वभा. १३८. २. ३ ) । २. वे. सू. ४. २. १. अधि. १. अत एव च शब्दात्सर्वाणि दैवतानि यथानुकूलं विलीयन्ते । अग्नौ सर्वे देवा विलीयन्ते । अग्निरिन्द्रे, इन्द्र उमायां, उमा रुद्रे विलीयते । एवमन्यानि दैवतानि यथानुकूलमिति गौपवनश्रुतिः । तथा मनः प्राण इत्युत्तराद्वचनान्मनोऽभिमानी रुद्रः प्राणे वायौ विलीयते । वायोर्वाव रुद्र उदेति वायौ विलीयते । तस्मादाहुर्वायुर्देवानां श्रेष्ठ इति च कौण्डिन्यश्रुतिः । ( म. भा. १५१. १. ३. ) । ३. वे. सू. ३. ४. १४. अ. ४. "प्रातरुत्थाय सन्ध्यामुपासीत''' वर्तयेदित्युक्ताचारपरामर्शेन विधिबन्धवर्जितत्वेन कामत एव तस्य चरणं कामचार इति जैमिनिर्मन्यते" इति, अनुष्ठेयानां मध्य एव कामतश्चरणं कामतो निवृत्तिरिति बादरायणो मन्यते । केन स्यात् येन स्यात्तेनेदृश एवेति साम्यश्रुतेः इति । केन स्याद्येन स्यादिति विधिर्वा । यथा वेदधारणं त्रैवर्णिकानां विहितं नाऽन्येषाम्, एवं स्वमतानुसारिणी प्रवृत्तिर्ज्ञानिनां विहिता । न तत्राऽधर्मशङ्का कार्या, नाऽन्येषामिति वा । स्वेच्छयैव प्रवृत्तिस्तु ब्रह्मणो विधिचोदिता । इति मध्वभाष्ये ( म. भा. १४३. २. ५—१४४. १. २. ) "श्रुतियुक्तिबलादेव तारतम्यं विभाव्यते । मुक्तावपि ततः केऽत्र विरोधं कर्तुमीशते" इत्यनुव्याख्याने ( अनु. २१८. १. ७ ) च निरूपितमिति ।

देवताविषयत्वेनाऽमितार्था इत्यङ्गावबद्धाधिकरणे(१) प्रतिपादितम् । एवमनेकार्थत्वेन सकलामपि श्रुतिमाकुलयतस्तव सृष्टिवाक्येष्वनेकस्रष्टृपरत्वं सम्भवतीत्यर्थः ॥ ४२ ॥

ननु—केषुचिद्वाक्येषु अनेकार्थत्वाङ्गीकारमात्रेण सृष्टिवाक्येष्वपि तदापादने मतान्तरेष्वपि तदापद्यते । श्लिष्टकवित्वेषु सूत्रनिबन्धेषु अनेकत्र विनियुक्तेषु मन्त्रेषु चाऽनेकार्थत्वस्य सर्वैरप्यङ्गीकृतत्वादित्यत आह—

**श्लेषप्राणे कवित्वे प्रमिततरतया श्लाघनीये च सूत्रे**
**नानाकर्मोपयोगश्रुतिसमधिगतानेकबोध्ये च मन्त्रे ।**
**एकार्थत्वव्यवस्थाप्यजनमनुमतं सर्वमीमांसकाना-**
**मन्यत्राऽपीच्छया तद्यदि तव भवति ब्रह्मवाक्येष्वपि स्यात् ॥४३॥**

शब्दानां व्यवस्थितैकार्थपरत्वमौत्सर्गिकं वक्तृविवक्षया विनियोगेन वा क्वचित्क्वचित्तदपोद्यत इति **सकलमीमांसकमर्यादा** । (२)तामतिलङ्घ्य स्वकल्पितार्थनिर्वाहाय स्वेच्छयैव श्रुतिवाक्येष्वनेकार्थत्वं कल्पयतस्तदर्थं शब्दानां यावन्तोऽर्था योगरूढ्यादिभिस्संभवन्ति तावदर्थपरत्वमौत्सर्गिकम् । पौरुषेयवाक्येषु तु वक्तृविवक्षावशादेकार्थनियतत्वमित्यभ्युपगच्छतस्तव वसन्तादिवाक्येष्विव सर्वेष्वपि ब्राह्मणवाक्येषु अन्यथापदविभागैर्योगरूढ्यादिभिश्चाऽनेकार्थप्रतीतिः सम्भवत्येवेत्यनिवार्यमनेकस्रष्टृपरत्वमित्यर्थः ॥ ४३ ॥

ननु "सदेव सौम्येदमग्र आसीत्" "ब्रह्म वा इदमग्र आसीत्" "आत्मा वा इदमेक एवाऽग्र आसीदि"त्यादिसृष्टिवाक्यगतानां सद्ब्रह्मादिपदानां "एको ह वै नारायण आसीदि" त्यादिविशेषवचनबलेन विष्ण्वेकनिष्ठत्वान्नाऽनेकस्रष्टृपरत्वं प्रसज्यत इत्याशङ्कां निराचष्टे—

**सृष्ट्यादिश्रवणैर्विशेषवचनान्नारायणैकान्तिभिः**
**स्पृश्या नेतरदेवता इति वचस्त्वैकार्थ्यवादोचितम् ।**
**तस्मात्तत्परता भवेत्तव परं नाऽन्यार्थधीवारणं**
**स्रष्टॄणां च विमुक्तवत्तव मते नाऽऽशङ्क्यमीर्ष्यादिकम् ॥४४॥**

इयं शङ्का श्रुतीनामैकार्थ्यवादिनश्शोभते । सृष्टिवाक्यानां विशेषवचनबलान्नारायणपरत्वावश्यंभावे (३)सत्यर्थान्तराणामवकाशाभावेन निरासात् । तव तु श्रुतीनामनेका-

१. वे. सू. अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्. ३. ३. ५७., अधि. ३६. ।
२. अतिक्रम्येति ग. पु. । ३. "नारायणपरत्वमपि सम्भवतीत्यवश्यं भावे सत्यर्थान्तराणामवकाश" ग. पु. ।

र्थपरत्वसम्भवं मन्वानस्य सृष्टिवाक्यानां नारायणपराणां सतामन्यपरत्वमपि सम्भवतीत्यबाधेन तेभ्यस्तद्धीरुदीयमाना वारयितुं न शक्या ।

नन्वन्यत्र श्रुतिवाक्यानामनेकार्थत्वसंभवेऽपि सृष्टिवाक्यानां नाऽनेकस्रष्टृपरत्वं सम्भवति । स्रष्टृबाहुल्ये कदाचित्तेषां परस्परमीर्ष्यादिना वैमत्येन प्रपञ्चसृष्ट्यनिर्वृत्तिप्रसङ्गादिति चेन्न । त्वन्मते मुक्तानामिव स्रष्टृणामपि निर्दोषतयेर्ष्याद्यनुदयोपपत्तेः ।

इत्थं हि तव मतम्—सायुज्यमुक्तिभाजो हि देवाः स्वोत्तमदेवतानुप्रवेशक्रमेण भगवद्देहमनुप्रविश्य ग्रहावेशन्यायेन भगवद्देहेन्द्रियैः तद्भुक्तानेव भोगान् कदाचिद्बहिर्निर्गत्याऽऽत्मस्वरूपभिन्नैश्चिन्मात्रदेहेन्द्रियैस्स्वसङ्कल्पोपनतांश्च भोगान् भुञ्जाना **आनन्दवल्युक्तक्रमेण** स्वरूपानन्दे ज्ञानैश्वर्यभोगेषु चोत्तरोत्तरं ज्ञानगुणोत्कृष्टाः पूर्ववदत्र मुक्तावपि यथास्वं ब्रह्मेन्द्रवरुणचन्द्रसूर्यादितत्तदधिकारिदेवतापदं तदनुसारिणमुत्तमाधमभावं पूज्यपूजकादिव्यवस्थां चाऽनुभवन्तो विहरन्ति । देवव्यतिरिक्तास्तु सालोक्यादिमुक्तिभाजो यथाधिकारं भूरादिषु सप्तसु लोकेषु भगवल्लोकेषु स्थितानि भगवतस्स्थानानि प्राप्य स्वेच्छागृहीतबाह्यदेहैश्चिन्मात्रदेहैर्वा स्वसङ्कल्पोपनतान् भोगान् भुञ्जानाः पूर्ववद्वर्णाश्रमादिभेदं तदनुसारिणीं पूज्यपूजकत्वादिव्यवस्थां ज्ञानानन्दैश्वर्यभोगतारतम्यञ्च प्राप्ता विहरन्ति । न चैवं मुक्तानां तारतम्यवत्वे तद्दर्शनकृतदुःखद्वेषेर्ष्यादिभिर्मुक्तेरपुरुषार्थत्वप्रसङ्गः । निर्दोषाणां तेषां गुरुशिष्यवत्तदप्रसक्तेरिति ।

यदैवं स्वाधिकज्ञानानन्दभोगैश्वर्यवतः पश्यतां स्वयं तत्सेवकत्वादिना ततो निकर्षमनुभवतामपि दुःखेर्ष्याद्यभावः तदा किमु वक्तव्यं नित्यनिर्धूतनिखिलदोषसकलकल्याणगुणाकरपरब्रह्मरूपाणामवाप्तसकलकामानां स्वाधिकानन्दादिकं क्वचिदप्यपश्यतां कुतोऽपि निकर्षमननुभवतामीश्वराणां ईर्ष्यादिना वैमत्यं न भवतीति ? यदि त्वीर्ष्यादीनामन्तःकरणधर्मत्वान्मुक्तानां अन्तःकरणाभावात्तदभावः समर्थ्यते तदेश्वराणामपि तथाभूतान्तःकरणवत्वमनङ्गीकृत्यैव तदभावस्समर्थ्यतामिति भावः ॥ ४४ ॥

ननु यदि सृष्टिवाक्यादिप्रतिपाद्यपरब्रह्मरूपा जगत्कर्तारो बहवस्तदा तेषां "परास्य शक्तिर्विविधैव श्रूयत" इति श्रुतिबलात्प्रत्येकमचिन्त्यापरिमितशक्तिमत्वमङ्गीकरणीयमित्यन्योन्यानपेक्षया निखिलजगत्स्रष्टुं शक्तानां तेषां संभूय स्रष्टृत्वकल्पनमयुक्तम् । लोके प्राकारगोपुरादिषु शिल्पिनां सम्भूयकारित्वस्य प्रत्येकशक्तिनिबन्धनत्वात् । अतस्सृष्टिवाक्यानां एकस्मिन्नेव स्रष्टरि पर्यवसानावश्यंभावे विशेषवचनबलान्नारायणे पर्यवसानं स्यादित्याशङ्क्याऽऽह—

**स्रष्टुं प्रत्येकमीशास्सकलमपि परब्रह्मभूतास्त्रयश्चेत्**
**संभूयैते सृजेयुः किमिति भजति ते नाऽत्र शङ्कावकाशम् ।**

स्रष्टुं शक्तो विनैव स्वयमुपकरणैरच्युतस्तद्व्यपेक्षा
सृष्टौ लीलाऽस्य दण्डग्रहणमिव गतौ जाङ्घिकस्येव मन्तुः ॥४५॥

इयमाशङ्का तव भवितुं नाऽर्हत्येव । त्वयेश्वरस्य जगत्सृष्टौ नियमेन प्रकृत्यादिक्रमपेक्षमाणस्य तत्राऽपि प्रकृतिमुपादानत्वेनैव कालादिकं निमित्तत्वेनैवाऽपेक्ष्य प्रकृत्यैव महान्तं, महतैवाऽहङ्कारं इत्यादिक्रमनियमं चाऽपेक्ष्य सृजतः किन्नाम स्वातन्त्र्यम् ? । स्वातन्त्र्ये सति कदाचित्प्रकृत्यादिकमनपेक्ष्य निमित्तोपादानकार्यक्रमादिकं वाऽव्यक्तस्य सृष्टिप्रसङ्गादित्याशङ्क्य साधनान्तरतद्व्यवस्थाक्रमनियमापेक्षयाऽपि युक्तमेवाऽस्य स्वातन्त्र्यम् । तदपेक्षणस्य शक्त्यभावनिबन्धनत्वाभावात् । स्वयमेव गन्तुं शक्तस्याऽपि गमनसमये लीलया दण्डावष्टम्भवत् स्वेच्छामात्रनिबन्धनत्वादित्यारम्भणाधिकरणादिषु परिहृततया तन्न्यायेन प्रत्येकमखिलजगत्सृष्टिशक्ता अपि परमेश्वराः केवलं लीलया सम्भूय जगत्सृजन्तीति वक्तुं शक्यत्वादिति भावः ॥ ४५ ॥

ननु च "द्यावाभूमी जनयन् देव एक" इत्यादिकर्त्रैक्यश्रुतिविरुद्धं सृष्टिवाक्यानामनेककर्तृपरत्वमित्याशङ्क्याऽऽह—

कर्त्रैकत्वं वदन्ती कलयतु भणितिर्वारणेनाऽर्थवत्ता-
मेकैकस्यैव कर्तुर्बहुभवनमुखानीतभेदप्रसक्तेः ।
येन त्वं नेह नानाप्रभृतिमुपनिषद्भारतीं विप्रलब्धुं
निर्द्वैतब्रह्मचौर्यव्यसनमनुभवन्नीहसे साहसेन ॥४६॥

कर्त्रैक्यश्रुतिः ब्रह्मविष्णुरुद्राणां मध्ये एकैकस्यैव कर्तुः "तदैक्षत बहु स्यां प्रजायेये" त्यादिषु श्रुतैर्बहुभवनमुखैः उपस्थापितायाः भेदप्रसक्तेर्निवारणेनाऽर्थवती स्यात् । एवमेव हि त्वया निष्प्रपञ्चब्रह्मापलापव्यसनिना "नेह नानाऽस्ति किञ्चन" "एकधैवाऽनुद्रष्टव्यमि" त्यादिश्रुतीनां विष्णोरन्नमयादीनि रूपाणि शिरःपक्षपुच्छाद्यवयवाः ज्ञानानन्दादयो गुणाः सृष्टिसंहरणादिक्रियाः सर्वगतत्वादयो भावरूपधर्माः अदृश्यत्वादयश्चाऽभावरूपधर्माः विष्णोस्सकाशात् परस्परस्माद्भिद्यन्ते इति शङ्कावारणेनाऽर्थवत्ता दर्शितेत्यर्थः ॥ ४६ ॥

प्रकारान्तरेणाऽपि कर्त्रैक्यश्रुतिनिर्वाहस्सम्भवतीत्याह—

यो यस्योपास्तियोगस्स्फुरति नियमतस्तस्य कर्ता स एवे-
त्यर्थं तं वा तदैक्यश्रुतिरनुवदतु श्रोतृधीभेदभिन्ने ।
क्लृप्तो यस्याऽल्पभूयोऽधिकगुणकपरोपास्तियोग्यत्वभाजा-
मात्मेत्येवेत्युपासाविधिरवधृतिमानित्थमर्थान् ब्रुवाणः ॥४७॥

ईश्वराणां मध्ये यदुपासने यस्य पुरुषस्याऽनादियोग्यता स एव जगत्कर्ता, नाऽन्य इति तस्य स्फुरतीति तत्तदधिकारिबुद्धिविषयं तमेवाऽर्थं तस्य तस्याऽधिकारिणः श्रवणकर्तृबुद्धिभेदेन भिन्नं भिन्नं कर्त्रैक्यश्रुतिरनुवदति इत्येवं वा तन्निर्वाहोऽस्तु। न च श्रुतीनामनेकार्थत्वसंप्रतिपत्तावपि श्रोतृभेदेन भिन्नभिन्नार्थबोधकत्वं न संप्रतिपन्नमिति वाच्यम्। "आत्मेत्येवोपासीते"ति विधौ तत्र तत्संप्रतिपत्तेः।

इत्थं हि तव मतम्—ब्रह्मोपासनायां ह्यधिकारिणस्तावदुपास्यगुणभेदेन त्रिविधाः। सत्यज्ञानानन्दादिभिः अल्पैर्गुणैर्मर्त्याः। सम्भूतिद्युव्याप्त्यादिभिः सहितैः भूयोभिर्गुणैरिन्द्रादिदेवताः। अखिलैर्गुणैश्चतुर्मुखादयश्च। देवेषु मर्त्येषु च स्वस्वविमुक्त्यर्थोपासनीयगुणविशेषोपसंहारानुपसंहाराभ्यां गुणभूयस्त्वाल्पत्वावान्तरभेदैस्त्वतिबहवोऽधिकारिणः सर्वान्प्रति तत्तद्योग्यगुणविशिष्टब्रह्मोपासनाभेदानां विधायक"मात्मेत्येवोपासीते" ति वाक्यम्। तत्र देवेषु मर्त्येषु च यस्य यावद्गुणोपासने योग्यता तं प्रति तावद्गुणविशिष्टं ब्रह्म आत्मशब्दो विधत्ते। एवकारस्तदयोग्यगुणव्यवच्छेदकः चतुर्मुखादीन्प्रति सकलगुणविशिष्टं ब्रह्माऽभिधत्ते। एवकारस्तदयोगव्यवच्छेदक इति।

**स्यादेतत्**—युक्तमुपासनाविधिवाक्यस्य पुरुषभेदेन विरुद्धानेकार्थप्रतिपादकत्वं, न तु वस्तुपरवाक्यस्योपासनावाक्यस्य तत्तत्पुरुषं प्रति तत्तद्योग्यगुणविशिष्टमेव ब्रह्मोपासनीयं नाऽयोग्यगुणविशिष्टमिति बोधकत्वे हि न प्रामाण्यं हीयते। हीयते तु "सदेव सोम्येदमि" ति वस्तुपरवाक्यस्य तत्तत्पुरुषं प्रति शिव एव जगत्कर्ता नाऽन्य इत्यादिबोधकत्वे। पुरुषभेदेनाऽनुष्ठानवद्वस्तुस्वरूपस्य भेदासंभवादिति चेत्; मैवम्। त्वया पुराणेषु रामकृष्णाद्यवताररूपाणां भेदश्रवणं लौकिकैर्भ्रान्त्या गृहीतस्य भेदस्याऽनुवादकमिति(१) "सर्वथाऽपि तु त एवोभयलिङ्गादि" त्यधिकरणे(२)**ऽनुव्याख्यानन्या-(३)यसुधयो**रुक्तत्वेन तथैव कर्त्रैक्यश्रुतेरप्यनुवादकत्वोपपत्तेः। न च वाच्यमवतारेषु तत्कालवर्तिनां लौकिकानां केषाञ्चिद्भेददृष्टिस्सम्भवति। अन्येषां च बहुत्वादिलिङ्गकानुमानाभासेनेति युक्तस्तस्याऽनुवादः। न तु जगत्कर्त्रैक्यस्य। तस्य श्रुतिं विना लोकतः प्रत्येतुमशक्यत्वादिति। त्वया पुरुषाणां योग्यतावन्माहात्म्यज्ञानपूर्वकस्नेहरूपा भक्तिरप्यनादिरिति (४)"स्थानविशेषात्प्रकाशादिवत् (५)अनुबन्धादिभ्यः" इत्यधि-

१. वे. सू. ३. ४. ३४.। २. अनु. २१८. १. ८.। ३. न्याय. ५८४. २. ८.। ४. वे. सू. ३. २. ३५. अधि. १७। अत्र **मध्वभाष्यम्**—यथाऽऽदित्यस्य दर्पणादिस्थानविशेषात् प्रतिबिम्बे विशेषः एवमानन्दादेरपि। ब्रह्मादिगुणवैशेष्यादानन्दादिः परस्य च। प्रतिबिम्बत्वमायाति मध्योच्चादिविशेषतः। इति वाराहे इति पाद्मे। इति ( म. भा. १३३. २. १० )। ५. वे. सू. ३. ३. ५१. अधि. ३१। न केवलं श्रवणादिभिः गुरुप्रसादेन च ब्रह्मदर्शनम्; किन्तु भक्त्यादिभिश्च।

करणयोरुक्तत्वेन शिवादिभक्त्यन्तर्गतस्य शिव एव जगत्कर्ता नाऽन्य इत्यादिरूपेण तत्तन्माहात्म्यज्ञानस्याऽप्यनादित्वसम्भवात् । त्वया सर्वेषां मतानामनादित्वस्योक्ततया तत्तन्मताहितमाहात्म्यज्ञानपरम्परानादित्वसम्भवाच्चेति भावः ॥ ४७ ॥

परसम्प्रतिपन्नश्रुत्युदाहरणेनाऽपि कर्त्रैक्यश्रुतेरसदर्थबोधकत्वं संभवतीत्याह—

**पूर्णत्वं ते निमित्तं निरवधिगमनं भूमशब्दस्य वृत्तौ**
**वैकुण्ठे तद्गुणानां तदपि किल ततः तारतम्येन वेद्यम् ।**
**इत्थं वस्तुस्वभावं क्वचिदपि गणयन्बोध्यधीवृत्तिभेदा-**
**द्भेदस्स्यादस्तिवादी यदि तव भवति व्यंसकः काऽत्रचिन्ता ॥४८॥**

"यो वै भूमा तत्सुखमि"ति श्रुतौ भूमशब्दस्तावत्तवाऽपि ब्रह्मपरः । तत्राऽयं तावत्त्वन्मते विशेषः—"**बहोर्लोपो भू च बहोः**" (पा. सू. ६. ४. १५८.) इति भावे निष्पन्नोऽपि भूमशब्दो "यो वै भूमा तदमृतमि"त्यादिषु धर्मिण्येव प्रयोगाद्धर्मिणि रूढः । तस्य च परब्रह्मणि धर्मिणि वैकुण्ठे प्रवृत्तौ निमित्तमवधिविशेषगणनानिरपेक्षपूर्णत्वं न त्वस्मादेवाऽयं पूर्ण इति प्रतियोगिविशेषापेक्षम् । प्रकरणोपपदादिसङ्कोचकाभावात् । नामवागाद्युत्तरोत्तरोत्कृष्टनिरूपणे चरमकक्ष्यापन्नत्वान्नाऽल्पे सुखमस्तीति निरुपपदेनाऽल्पपदेन सर्वस्याऽप्यल्पस्य प्रतियोगित्वेन निर्देशाच्च । तत्तु निरवधिकं पूर्णत्वं न धर्मिण एव परममहत्वरूपम्; किन्तु तत्तद्गुणानामानन्दादीनां निरतिशयत्वरूपं "वाग्वाव नाम्नो भूयसी"त्यादौ वैपुल्यरहितेषु वाक्सङ्कल्पध्यानादिष्वपि तत्तत्प्रकरणे भूमशब्दसमानार्थकभूयश्शब्ददर्शनेनाऽत्रापि तदैकरूप्याय गुणतो वैपुल्यस्यैव तदर्थतौचित्यात् । तच्च पूर्णत्वं सर्वेषामधिकारिणां नैकप्रकारेण श्रवणमननध्यानसाक्षात्कारेषु प्रतीयते, किन्तु तद्योग्यतानुसारिणा तारतम्येन । न च पूर्णत्वे तारतम्यासम्भवः । आनन्त्य इव तदुपपत्तेः । अस्ति हि पूर्वोत्तरकल्पापेक्षयाऽतीतक्षणेषु सतोरानन्त्ययोस्तारतम्यमिति । तदेतत्सर्वं (१) "भूमा सम्प्रसादादध्युपदेशात्, (२)भूम्नः क्रतुवज्ज्यायस्त्वम् (३)ब्रह्मदृष्टिरुत्कर्षात् (४) नानाशब्दादिभेदात्" इति त्वदीयाधिकरणेषु स्पष्टम् । तत्रेदमुच्यते—इयत्तापरिच्छेदराहित्यमात्ररूपं सम्भवति तारतम्यमानन्त्ये । न तु निरतिशयत्वसर्वोत्तमत्वसर्वोत्कृष्टत्वापरपर्यायतया

सर्वलक्षणसम्पन्नस्सर्वज्ञो विष्णुतत्परः । यद्गुरुस्सुप्रसन्नस्सन्दद्यात्तन्नाऽन्यथा भवेत् ॥ (म. भा. १४०. १. ७.) । १. वे. सू. १. ३. ८. अधि. २ । २. वे. सू. ३. ३. ५९. अधि. ३७ । ३. वे. सू. ४. १. ५. अधि. ४ । ४. वे. सू. ३. ३. ६. अधि. ३८ ।

तेष्वधिकरणेषु त्वयोद्घोषिते भूमशब्दब्रह्मशब्दयोः प्रवृत्तिनिमित्ततया त्वदभिमते ब्रह्मानन्दादीनां पूर्णत्वे निरतिशयत्वादिस्वरूपव्याघातात् । न हि ये तारतम्यशालिनस्ते निरतिशयास्सर्वोत्तमा इति च युज्यते । तेषु यस्य यदपेक्षया निकर्षः तस्य तेन सातिशयत्वस्योत्तमत्वस्य चाऽवर्जनीयत्वात् ।

यद्युच्येत—परमेश्वरस्याऽचिन्त्यशक्तिमहिम्ना तदानन्दादिविशेषाणां परस्परं तारतम्यवतामपि निरतिशयत्वादि सम्भवतीति । तदा परमेश्वराणामचिन्त्यशक्तिमहिम्ना परस्परं भिन्नानामप्येकत्वं सम्भवतीति किमिति वक्तुं न शक्यम् ? । तस्मात्परब्रह्मानन्दैकदेशान्सातिशयत्वेन भूम्न एव भूमरूपतया तत्तदधिकारिणं प्रति भूमशब्दः प्रतिपादयतीति त्वया वक्तव्यम् ।

ननु सातिशयानामपि ब्रह्मानन्दैकदेशानां वागादीनां भूयस्त्ववत् भूमरूपत्वमुपपद्यत एव । भूमशब्दस्य तन्निरतिशयत्ववाचकतोक्तिस्त्वशेषविशेषसहितब्रह्मानन्ददर्शनयोग्याधिकारिविशेषमपेक्ष्येति कल्प्यत इति चेन्न । त्वन्मते तथाभूताधिकारिण एवाऽसिद्धेः । (१)हिरण्यगर्भपर्यन्तास्सर्वेऽप्यधिकारिणो मुक्त्यनन्तरमपि ब्रह्मानन्दैकदेशस्यैव द्रष्टारः । नित्यमुक्ता श्रीरपि तथैवेत्यभिमतमोक्षनिरूपणप्रस्तावेऽ**नुव्याख्यानन्यायसुधयो**रुक्तत्वात् । त्वदीयान्प्रति ब्रह्मानन्दैकदेशबोधकस्य भूमशब्दस्य तन्निरतिशयत्वबोधकत्वाभावे त्वदीयग्रन्थेषु निरतिशयत्वापरपर्यायं भूमत्वमित्यादिव्यवहारायोगाच्च । तस्माद्यस्याऽधिकारिणो यावद्दर्शने योग्यता तं प्रति तावन्तमेव सातिशयं ब्रह्मानन्दैकदेशं निरतिशयतया भूमशब्दः प्रतिपादयतीत्यकामेनाऽपि त्वया स्वीकरणीयम् । तथा च यदि क्वचिद्वेदस्तत्तद्वादिनः प्रति स्यादस्ति स्यान्नाऽस्तीत्यादिविरुद्धप्रकारान् वदन् क्षपणक इव वञ्चकस्स्यात् तदा तद्वदेव सृष्टिवाक्यानामपि शैववैष्णवादीन्प्रति विरुद्धनानाप्रकारबोधकत्वं संभवतीति तत्र तत्र विशिष्य का विचिकित्सेति भावः ॥ ४८ ॥

एवं नारायणस्यैव स्रष्टृत्वे विशेषवचनानि सन्ति नाऽन्येषामित्यङ्गीकृत्य तथाऽपि परमते विरोधाभावात् 'सदेवे' त्यादिवाक्यान्यनुमानातीततात्पर्याणि शिवविरिञ्चयोरपि स्रष्टृत्वपराणि स्युरित्यापादितम् । तदुपपादनार्थं च परमते सृष्टिवाक्यानामनेकस्रष्टृपरत्वे शब्दतोऽर्थतश्च विरोधाभाव उपपादितः । इदानीं शिवविरिञ्चयोरपि स्रष्टृत्वे विशेषवचनानि सन्तीति सुतरां तानि तत्प्रतिपादकानि स्युरित्याह—

१. उषा स्वाहा च पर्जन्यो मित्रोऽग्निर्वरुणो विधुः । प्रवहोऽनिरुद्ध इन्द्रोमे रुद्रो वाणी च मारुतः । उत्तरोत्तरतस्त्वेते गुणैस्सर्वैश्च मुक्तिगाः । इत्यादिना—एतेभ्योऽभ्यधिका श्रीस्तु सदा मुक्ता विशेषतः । इत्यन्तेन प्रकरणेन अनुव्याख्याने निरूपितमत्राऽवगन्तव्यम् ( अनु. २१३, १. १० ) ।

**किञ्च स्थाणुविरिञ्चयोरपि जगत्कर्तृत्वमावेदय-**
**न्नस्त्येव श्रुतिमस्तकेषु बहुधा वैशेषिको गीर्गणः ।**
**ऐकार्थ्यं सहते स सृष्टिवचसां नैव त्वदीये मते**
**तत्तन्नामपदप्रसिद्ध्यतिगतौ हेतुश्च नाऽस्त्येव ते ॥४९॥**

**इति श्रीमदप्पयदीक्षितेन्द्रकृतिषु मध्वतन्त्रमुखमर्दने**
**तृतीयाधिकरणदूषणम् ॥**

"यदा तमस्तन्न दिवा न रात्रिर्न सन्न चाऽसच्छिव एव केवलः ।
तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी ॥"

"प्रजापतिर्वा इदमेक आसीत् । नाऽहरासीन्न रात्रिरासीत् । सोऽस्मिन्नन्धे तमसि प्रासर्पदि" त्यादीनि शिवविरिञ्चयोरपि जगन्मूलकर्तृत्वमावेदयन्ति विशेषवचनानि सन्त्येव । न च तेषु स्थितानि शिवप्रजापतिपदानि प्रसिद्धस्वस्वार्थादपनीय नारायण एव स्थापयितुं तत्तन्नामपदानां अन्यत्र योगसम्भवासम्भवादिविचारस्तव युज्यते । त्वन्मते सृष्टिवाक्यानामनेकस्रष्टृपरत्वस्याऽविरुद्धतया प्रसिध्यतिक्रमायोगात् । विरुद्धे खलु तेषामनेकस्रष्टृपरत्वे तत्तत्सृष्टिवाक्यस्थसृष्टिप्रतिपादकानां पदानामेकस्रष्टृपरत्वावश्यंभावेन सावकाशनिरवकाशादिन्यायविचारः प्रवर्तनीयस्स्यात् । तस्मात् त्वन्मते सृष्टिवाक्यानामनुमानविशेषवचनानुसारेणाऽनेकस्रष्टृपरत्वं भवेदेवेति न पूर्वपक्षोपन्यस्तानुमानदूषणं युक्तमिति भावः ॥ ४९ ॥

इत्यप्पदीक्षितकृतौ कृतिनां मतेऽस्मिन्नानन्दतीर्थकृतशास्त्रमुखावमर्दे ।
एतत्तृतीयमधिकृत्य नयं प्रवृत्तं दोषप्रदर्शनमुपस्करणीयमार्यैः ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्ग-
राजाध्वरीन्द्रसूनोः चतुरधिकशतप्रबन्धनिर्माणचणस्य श्रीमदप्पयदीक्षिते-
न्द्रस्य कृतिषु मध्वतन्त्रमुखमर्दनव्याख्याने **मध्वमतविध्वंसने**
शास्त्रयोनित्वाधिकरणदूषणाख्यं तृतीयं प्रकरणम् ॥

**स्यादेतत्**—यदुक्तं विशेषवचनानुसारेण शिवविरिञ्चयोरपि सृष्टिवाक्यानि पर्यवस्यन्तीति तन्न युक्तम् । समन्वयसूत्रेण तदाशङ्कानिराकरणात् । तत्र हि वेदेऽपि क्वचित्क्वचित्पशुपतिहिरण्यगर्भादीनां जगत्कर्तृत्वं प्रतीयत इति पूर्वाधिकरणाक्षेपे सम्यग्विचारितादुपक्रमादितात्पर्यलिङ्गरूपादन्वयाद्विष्णुरेव जगत्कर्तृतया वेदप्रतिपाद्य इत्यतोऽन्यथाप्रतीतिरज्ञानमूलेति स्थापितमित्याशङ्कां निराचष्टे—

**रोद्धा नोपक्रमादिश्रुतिषु नयगणस्त्वन्मतेऽर्थान्तराणां**
**रोद्धा चेत्कर्मकाण्डे कथमपि न भवेद्ब्रह्मनिष्ठा पदानाम् ।**
**किं चाऽत्रोपक्रमादावपि तव विसरेद्भूमशब्दस्य रीति-**
**र्यस्मात्सर्वस्तमेव श्रयति नयगणं स्वस्वसिद्धान्तसिद्ध्यै ॥५०॥**

यद्यप्युपक्रमादयो विष्णौ व्यवस्थितास्स्युस्तथाऽपि ते श्रुतीनां विष्णुपरत्वावगमनमेव कुर्युः न तु शिवविरिञ्चपरतानिवारणमपि । अनेकार्थसहिष्णोस्तव मते विरोधाभावेन शिवविरिञ्चपरत्वस्याऽपि संभवात् । न हि प्रबलं प्रबलमित्येव दुर्बलस्य बाधकम्, अपि तु सति विरोधे । यदि तूपक्रमादयो विरोधाभावेऽपि स्वानीततात्पर्यादर्थादर्थान्तरं स्वभावादेव वारयेयुस्तदा त्वन्मते कर्मकाण्डस्थपदानां ब्रह्मपरता न स्यात् । अभ्युपगतं च त्वया "श्येनेनाऽभिचरन् यजेते" त्यादिवाक्येषु श्येनादिपदानां "यथा वै श्येनो निपत्याऽऽदत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्याऽऽदत्त" इत्याद्युपसंहारप्राबल्यादिन्यायैः कर्मनामधेयत्वं प्रापितानामपि वसन्तादिवाक्येषु प्रदर्शितया रीत्या ब्रह्मपरत्वमपि ।

ननु श्रुतीनां शिवपरत्वे विरिञ्चपरत्वे च तदेकवाक्यतापन्नोपक्रमादीनां विष्णौ व्यवस्थितानामन्वयो न स्यादिति चेत्; मा भूत् । विष्णुपरत्व एव तेषामन्वयोऽस्तु । न हि त्वन्मते क्वचिदर्थे यावतामेकवाक्यता तावतामर्थान्तरेऽप्येकवाक्यतेति नियमोऽस्ति श्येनादिपदानां ब्रह्मपरत्वे प्रसिद्धश्येनसादृश्यप्रतिपादकवाक्यशेषान्वयाभावात् । न च वाक्यशेषस्याऽपि ब्रह्मपरत्वेन तदेकवाक्यता सम्भवतीति वाच्यम् । कर्मकाण्डस्थपदानां पदविधयैव ब्रह्मणि समन्वयो न वाक्यविधयेति त्वया (१)"वाक्यान्वय" सूत्रे वर्णितत्वात् । वसन्तादिवाक्यस्थपदानामपि तथैव तत्समन्वयस्य (२)प्रदर्शितत्वाच्च ।

नन्वेवं सति श्येनपदस्य गुणपरत्वमपि स्यात्, वाक्यशेषस्य कर्मनामत्व एवाऽन्वय इति वक्तुमशक्यत्वादिति चेत्; तदपि दूषणं तव मतेऽस्माभिरापाद्यमेव । अस्माकं

१. वे. सू. १. ४. २०. । २. ज्योतिरुपक्रमादित्यादिषु सूत्रेष्वनुव्याख्यानन्यायसुधयोः स्पष्टम् ।

त्वनेकार्थत्वानङ्गीकारादेव तन्न प्रसज्यते । अपि चोपक्रमादीनां विष्णौ व्यवस्थितत्वमप्यसिद्धम् । शैवादयोऽपि ह्युपक्रमादीनेवाऽवलम्ब्य श्रुतीनां शिवादिपरत्वं वर्णयन्ति । उपपादयन्ति चोपक्रमादीनां शिवादिविषयत्वं तद्गतपदशक्त्यादिप्रदर्शनेन ।

ननु शैवादिशिव एवोपक्रमादयो न विष्णौ विरिञ्चे वेति वर्णयन्ति । एवं वैष्णवा वैरिञ्चाश्च परपक्षप्रतिक्षेपेण वदन्ति । न चैतानि मतानि परस्परविरुद्धानि सर्वाण्यपि ग्राह्याणि । अतोऽत्र बलाबलविचारावश्यम्भावाद्बलवद्भिर्न्यायैरुपक्रमादीनां विष्णौ व्यवस्थितत्वसिद्धिरिति चेत्; मैवम् । यथा भूमशब्दस्तवाऽशेषविशेषसहितब्रह्मानन्दवाचकोऽपि तत्तदधिकारिणं प्रति योग्यतानुसारेण किञ्चित्किञ्चिद्ब्रह्मानन्दांशमेव बोधयति तथैव सृष्ट्यादिश्रुतयस्तदुपक्रमादयश्चाऽनेककर्तृपरा अपि तत्तद्योग्यतानुसारेणैकैकमेव कर्तारं बोधयन्ति । श्रुतिवाक्येभ्यस्तेषां कर्त्रन्तरबोधानुदयात्तु श्रुतिवाक्यानां कर्त्रन्तरपरत्वाभावाभिमान इत्युपपत्तेः । तस्मादुपक्रमादिबलान्न सृष्टिवाक्यानां विष्णौ व्यवस्थितत्वसिद्धिरिति भावः ॥ ५० ॥

ननु तन्मतस्थानामभिमानमात्रं यथाकथंचिदुपपद्यतां नाम । शैववैष्णववैरिञ्चपुराणागमेषु शिवादीनां परस्परसृज्यत्वसंहार्यत्वाराधकत्वादिना भूयसी निकर्षोक्तिर्दृश्यमाना सर्वेषां समानकक्षतया जगत्कर्तृत्वेऽनुपपन्ना बलाबलविचारमन्तरेण न व्यवतिष्ठते । तद्विचारे वैष्णवपुराणागमानां बलवत्वात्तदनुसारेणोपक्रमादिसहितानां सृष्टिस्थित्यादीनां विष्णौ व्यवस्थितत्वं सिध्येदित्याशङ्क्याऽऽह—

**स्फारात्तत्तत्पुराणागमवचनशतप्रापिता याऽन्यनिन्दा**
**तत्तद्भक्त्यादिसिध्यै भुवनविरचने सा भवेद्द्वारमात्रम् ।**
**कर्मानुष्ठापनार्थं किमु निरतिशयां ब्रह्मसंस्थादिनिन्दा-**
**मापस्तम्बादिवाक्ये न कलयसि ततः काऽस्य हानिस्तवेष्टा॥५१॥**

**इति श्रीमदप्पयदीक्षितकृतिषु मध्वतन्त्रमुखमर्दने चतुर्थं प्रकरणम् ॥**

परस्परनिन्दावचनानि "नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते, अपि तु स्तुत्यं स्तोतु"मिति न्यायेनोदितानुदितहोमनिन्दादिषु (१)दृष्टेन तत्तद्देवताविषयनिश्चलभक्तिसिद्धिप्रयोजने स्तुतिविरचने द्वारमात्रत्वेनोपपन्नानि । दृश्यते **ह्यापस्तम्बसूत्रे** (२)"अथाऽप्युदाहरन्ती" त्यारभ्य "तस्माच्छ्रुतितः प्रत्यक्षबलत्वाच्च त्रिशिष्टानाश्रमानेता-

१. "यदुदिते जुहुयात् । यथाऽतिथये प्रद्रुताय शून्यायाऽवसस्थायाऽन्वाहार्यं हरन्ति तादृगेवतत्" इत्युदितहोमनिन्दा । "प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम् । दिवाकीर्त्यमदिवाकीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषाम् ।" इत्यनुदितहोमनिन्दा । २. आप. ध. सू. प्र. २. खं. २३. सू. ८. ।

नेके ब्रुवत" इत्यन्तेन गार्हस्थ्यस्य निकर्षमूर्ध्वरेतसामाश्रमाणामुत्कर्षञ्च केषाञ्चिन्मतत्वेनोपन्यस्य "त्रैविद्यवृद्धानान्तु वेदाः प्रमाणमिति निष्ठा। तत्र यानि श्रूयन्ते व्रीहियवपश्वाज्यपयःकपालपत्नीसम्बद्धान्युच्चैर्नीचैः कार्यमिति तैर्विरुद्धाचारोऽप्रमाणमिति मन्यन्ते" इति दर्शपूर्णमासादिकर्मानुष्ठानरहितोर्ध्वरेतसामाचारो वेदविरुद्धत्वादनाचार एवेति सकलत्रैविद्यवृद्धसम्मतत्वेन स्वमतप्रदर्शनम्। तत्र कर्माण्यनुतिष्ठतामेव ब्रह्मलोकावाप्तिराश्रमान्तरं प्रशंसतामपि महान् प्रत्यवाय इत्यत्र सम्मतिवचनोदाहरणञ्च।

(१)"अथाऽपिप्रजापतेर्वचनम्—

त्रयीं विद्यां ब्रह्मचर्यं प्रजातिं श्रद्धां तपो वेदमनुप्रदानम्।

य एतानि कुर्वते तैरित्सह स्मो रजो भूत्वा ध्वंसतेऽन्यत्प्रशंसन्"इति।

तथा (२)**महाभारतेऽपि शान्तिपर्वणि** ज्ञातिवधनिर्वेदात्सन्यासोद्युक्तं युधिष्ठिरं प्रति तद्भ्रातॄणां महर्षीणां भगवतः श्रीकृष्णस्य च वचनेषु भूयसी सन्यासनिन्दा दृश्यते। एवं सत्यपि सन्यासादेराश्रमान्तरस्य ततो न काचन हानिस्तवाऽभिमता, प्रत्युत सन्यासस्य गार्हस्थ्यादुत्कर्ष एव त्वया "कृत्स्नभावात्तु गृहिणोपसंहार" (३)इत्यधिकरणे समर्थितः, तत्र हि गृहस्थाश्रमः सन्यासादुत्कृष्टः।

१. अपि च प्रजापतेरपि वाक्यं अस्मिन्नर्थे भवति गार्हस्थ्यमेव वरिष्ठमिति। **त्रयीं विद्यां** त्रयाणां वेदानामध्ययनम्। **ब्रह्मचर्यं** अष्टाचत्वारिंशदादिकम्। **प्रजातिं** प्रजोत्पादनम्। **श्रद्धां** आस्तिक्यम्। **तपः** उपवासादि। **यज्ञमग्निहोत्रादिकं** सोमयागान्तम्। **अनुप्रदानं** अन्तर्वेदि बहिर्वेदि च दानं। **य एतानि** कर्माणि कुर्वते **तैरित्तै**रेव **सह** वयं **स्मः** त एवाऽस्माकं सहायाः। **अन्यत्तु** ऊर्ध्वरेतसामाश्रमादिकं **प्रशंसन्** पुरुषः **रजः** पांसुर्भूत्वा **ध्वंसते** नश्यति। इत्युज्वला ( आ. ध. सू. प्र. २. खं. २४ सू. ७८. )

२. शान्तिपर्वणि सप्तमाध्यायप्रभृत्युपरितनेष्वध्यायेषु प्रतिपादिता। ३. वे. सू. ३. ४. ४८. अधि ८.। **अत्र मध्वभाष्यम्**—"कुटुम्बी शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधत" इत्युक्त्वा "न च पुनरावर्तते न च पुनरावर्तत" इति गृहिणोपसंहारः क्रियते। तस्माद्गृहस्थस्यैवोत्तमत्वमिति वाच्यम्। यतः कृत्स्नगृहस्थान्देवानपेक्ष्यैवोपसंहारः क्रियते गृहिणो देवाः कृत्स्ना ह्येते यतयः। अतः न एतेषां पुत्रा दायमुपयन्ति। न चैते गृहान्विसृजन्ति। अरागा अद्वेषा अलोभा सर्वभोगास्सर्वज्ञास्सर्वकर्तार इति पौत्रायणश्रुतिः। न चाऽऽश्रमद्वयमेव मनुष्याणां "देवा एव ब्रह्मचारिणो देवा एव गृहस्थाः देवा एव वनस्थाः। अथ ह्येते मुनयः। एवं सर्ववर्णाः सर्वाश्रमाः। सर्वे ह्येते कर्म कुर्वन्ति।" इति कौण्ठरव्यश्रुतौ यतित्वदृष्टान्तेनाऽन्येषामप्युपदेशादिति ( म. भा. १४७. १. ७ )।

**छान्दोग्योपनिषदि** "कुटुम्बे शुचौ देशे स्वाध्यायमधीयान" इति गृहस्थाश्रममुपक्रम्य "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते । न च पुनरावर्तते" इति तन्मोक्षमुक्त्वोपसंहारात् । उपसंहारत्वेन च तत्र तात्पर्यावगमादिति पूर्वपक्षं कृत्वा सन्न्यास एव गार्हस्थ्यादधिकः । तन्मोक्षस्य गृहस्थमोक्षादधिककालसाध्यत्वेन तदतिशायित्वात् । गृहिणोपसंहारस्तु देवविषयो न मानुषविषयः । "कृत्स्ना ह्येव गृहिणो देवाः, कृत्स्ना ह्येते यतयः" इति पौत्रायणश्रुतौ "देवा एव ब्रह्मचारिणो देवा गृहस्था देवा वनस्था यथा ह्येते मुनयः एवं सर्ववर्णाः सर्वाश्रमाः सर्वे ह्येते कर्म कुर्वन्तो"ति कौण्ठरव्यश्रुतौ च सर्ववर्णाश्रमाचारवत्तयोक्तानां देवानां गृहस्थानां सतामपि मनुष्यसन्यासिभ्योऽधिकत्वादिति सिद्धान्तितम् ।

न चाऽऽ**पस्तम्बादि**वचनान्यपि मनुष्यसन्यासिभ्यो देवोत्कर्षविषयाणि भवन्त्विति वाच्यम् । तैर्विरुद्धाचारोऽप्रमाणमित्या**पस्तम्बेन** सन्यासादेरनाचारत्वस्यैवोक्तत्वात् । कर्मानुष्ठानपुत्रदारादिपोषणव्यग्राणां गृहस्थानाममृतत्वं न सम्भवतीति सन्यासाद्युत्कर्षवाद्युक्तगार्हस्थ्यनिकर्षहेतूद्धारसमये (१)"अथाऽप्यस्य प्रजातिममृतमाम्नायाऽऽह— "प्रजामनुप्रजायसे तदु ते मर्त्यामृतमिति । अथाऽपि स एवाऽयं विरूढः । प्रत्यक्षेणोपलभ्यते दृश्यते चाऽपि सारूप्यम् देहत्वमेवाऽन्य"दिति श्रुतियुक्तिभ्यां गृहस्थानां पुत्रपौत्रादिरूपेणैवाऽमृतत्वव्यवस्थापनेन गार्हस्थ्योत्कर्षप्रतिपादनस्य मानुषगृहस्थविषयत्वस्फुटीकरणाच्च । न हि त्वन्मते देवानां पुत्रपौत्रादिरूपेणाऽमृतत्वं सम्भावनीयम् । त्वया 'न देवपदवी प्राप्ता ब्रह्मदर्शनवर्जिता' इति सर्वेषां देवानां ब्रह्मसाक्षात्कारवत्त्वस्य स्वीकृतत्वेन तेषां मोक्षरूपामृतत्वस्यैव सम्भवात् ।

**(२)महाभारतेऽपि—**

पन्थानं पावनं हित्वा जनकं मौढ्यमास्थितम् ।
तं ददर्श प्रिया भार्या भैक्षवृत्तिमकिञ्चनम् ॥

इत्यादिर्वैदेहसन्यासनिन्दादिषु मनुष्यगार्हस्थ्यस्यैवोत्कर्षप्रतिपादनं स्पष्टमेव ।

१. अथाऽप्यपि च । **अस्य** गृहस्थस्य **प्रजातिं** प्रजासन्तानं **अमृतं** अमरणं वेदः आह—हे **मर्त्य** मरणधर्मिन् **प्रजां** जायमाना**मनु** त्वमेव **प्रजा**रूपेण **जायसे**। **त**देव **ते** मरणधर्मिणः **अमृतं** अमरणम् इति । न त्वं म्रियसे । यतस्त्वं प्रजारूपेण तिष्ठसि इति । उपपन्नं च तदित्याह—अपि च स एवाऽयं पृथ**ग्विरूढः प्रत्यक्षेणोपलभ्यते** । स एव द्विधाभूत इव लक्ष्यते । **दृश्यते हि सारूप्यं द्वयोः** । देहमात्रं तु **भिन्नम्** । देहत्वमिति स्वार्थिकः त्वः । इत्युज्वला ( आ. ध. सू. प्र. २. खं. २४. सू. १. २. ) । २. शान्तिपर्वणि नवमाध्याये स्थितोऽयं श्लोकः ।

तस्मान्मनुष्यलोके कर्माण्यनुष्ठापयितुं कल्पसूत्रं कृतवताऽऽ**पस्तम्बेन** कर्मप्ररोचनार्थं सन्यासाद्याश्रमं अनाचारत्वेन(१)"बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धम् । बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेते"ति ज्ञानसाध्यामृतत्वफलं मिथ्यात्वेन च दूषयित्वा गृहस्थानामेव स्वर्गोऽमृतत्वं चेति वर्णितम् । **महाभारते** च—

अथैककालिको वाऽहमेकैकस्मिन्दिनक्षये ।
चरन् भैक्षं मुनिर्मुण्डः क्षपयिष्ये कलेवरम् ॥

इत्युक्तवन्तं युधिष्ठिरं सन्यासोद्योगान्निवर्तयितुकामैस्तद्भ्रात्रादिभिर्गार्हस्थ्यप्ररोचनार्थं सन्यासं दूषयित्वा गार्हस्थ्यस्योत्कर्षो वर्णितः इत्येव गतिर्वक्तव्या ।

एवं पुराणागमेषु तत्तद्देवताराधनोपासनाद्यनुष्ठापनार्थं प्रवृत्तेषु तत्प्ररोचनार्थं देवान्तरनिकर्षो वर्णित इति किन्न सङ्गच्छते ? । अङ्गीकृतञ्च त्वयाऽपि "द्वेषाच्चैद्यादयो नृपाः" इत्यादौ भगवतः कृपालुत्वातिशयतात्पर्येण द्वेषान्मुक्तिवर्णनं, न तु नरकसाधनेन भगवद्द्वेषेण मुक्तिरस्तीति वदता पुराणेष्वन्यार्थतात्पर्येणाऽसदर्थकथनम् । तत्र दृष्टान्तोऽप्य**नुव्याख्याने** दर्शितः—

यथा क्रुद्धः पिता पुत्रं मरेत्याक्षेपपूर्वकम् ।
प्रोक्तस्स्याद्यस्य कृत्यर्थं वदत्येवं पुराणगम् ॥ इति ।

एवमेव ब्रह्मादिषु परस्परनिकर्षवचनानामपि अन्यपरतोपपत्तेः न तत्र बलाबलविचारापेक्षेति भावः ।

पुराणानां बलाबलविचारेऽपि परस्य न प्रत्याशेति उपपादितमस्माभिः **शिवतत्त्वविवेके** । यत्तु **शिवतत्त्वविवेके**—

१. आत्मनि **बुद्धे** अवगते सति तदेव ज्ञानं सर्वमशुभं प्रक्षाल्य क्षेमं प्रापयति । इत्यादि "तदिदं निराकरोति यानि यतेरेव कर्तव्यप्रतिपादनपराणि शास्त्राणि **तैरेव तद्विप्रतिषिद्धम्** । तत्र **मनुः**—क्रुद्ध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् । सप्तद्वारावकीर्णां च न वाचमनृतां वदेत् । न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया । नाऽनुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् । इति । अतो यतिमेव प्रकृत्य यानि विहितानि कर्माणि तानि कर्तव्यानि । यानि च निषिद्धानि तानि च वर्जनीयानि । बुद्धे क्षेमप्रापणमित्येतत्प्रत्यक्षविरुद्धमित्याह—आत्मबोधमात्रेण चेत्क्षेमं प्राप्यते **तदिहैव** शरीरे **दुःखं नोपलभेत** ज्ञानी । न चैतदस्ति । न हि ज्ञानिनां मूर्धाभिषिक्तंमन्योऽपि क्षुधादुःखमेव तावत्क्षणमात्रमपि संसोढुं प्रभवति । इत्यन्तेनोज्ज्वला ( आ. ध. सू. प्र. २. खं. २१ सू. १४. १५. १६ ) ।

क्वचिद्ब्रह्मा क्वचिद्विष्णुः क्वचिद्रुद्रः प्रशंस्यते ।
नाऽनेन तेषामाधिक्यं न्यूनत्वं वा कथंचन ॥
तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः ।
पुराणानि प्रणीतानि विद्वांस्तत्र न मुह्यति ॥

इत्यादिवचनान्युदाहृत्य पुराणेषु त्रयाणां परस्परोत्कर्षापकर्षवचनानि कल्पभेदेन व्यवस्थितानि प्रतीतार्थपराण्येवेत्युक्तम् । तद्वस्तुगतिमनुरुध्योक्तम् । इह तु परमते त्रयोऽप्यनादयो विश्वकर्तारः स्युरित्यापादननिर्वाहाय पुराणेषु परस्परस्तुत्यत्वादिवचनान्यप्यर्थवादास्स्युरित्यापादितमिति न विरोधः । एतेन श्रुतिष्वपि त्रयाणां परस्परनिकर्षवचनानि दत्तोत्तराणि । दृश्यन्ते हि श्रुतिष्वप्याश्रमान्तरनिन्दावचनानि—

(१)किन्तु मलं किमजिनं किमु श्मश्रूणि किं तपः ।
पुत्रं ब्रह्माण इच्छध्वं स वै लोकोऽवदावदः ॥
(२)नाऽपुत्रस्य लोकोऽस्ति तत्सर्वे पशवो विदुः ।
तस्मान्तु पुत्रो मातरं स्वसारं चाऽधिरोहति ॥

इत्यादीनि । एवमेव तान्यप्युपपद्यन्त इत्यलमतिविस्तरेण ॥ ५१ ॥

---

१. **ऐतरेयब्राह्मणे** हरिश्चन्द्रोपाख्याने अपुत्रेण हरिश्चन्द्रेणैक्ष्वाकेन पुत्रलाभेन किं प्राप्यत इति पृष्टस्य नारदस्य प्रतिवचनरूपासु दशस्वृक्षु चतुर्थीनवम्याविमे ऋचौ । अनयोरर्थावगमाय तत्रस्थं सायणभाष्यं तथैवोद्ध्रियते—अत्र मलाजिनश्मश्रुतपश्शब्दैराश्रमचतुष्टयं विवक्षितम् । मलरूपाभ्यां शुक्लशोणिताभ्यां संयोगान्मलशब्देन गार्हस्थ्यं विवक्षितम् । कृष्णाजिनसंयोगादजिनशब्देन ब्रह्मचर्यं विवक्षितम् । क्षौरकर्मराहित्याच्छ्मश्रुशब्देन वानप्रस्थ्यं विवक्षितम् । इन्द्रियनियमसद्भावात्तपश्शब्देन पारिव्राज्यं विवक्षितम् । मलं गार्हस्थ्यं किं नु किं नाम सुखं करिष्यति । न किंचिदित्यर्थः । एवमुत्तरत्राऽपि योज्यम् । हे ब्रह्माणो विप्रा विप्रक्षत्रियाद्याः सर्वे यूयं सुखहेतुत्वात्पुत्रमिच्छध्वम् । स वै स एव पुत्रोऽवदावदो लोकः । वदितुमयोग्यानि निन्दावाक्यान्यवदास्तैर्वाक्यैर्नोद्यते न कथ्यत इत्यवदावदः । एवं प्रपदेन तेन कथ्यत इति । अवदावदो दोषराहित्यान्निन्दानर्ह इत्यर्थः । तादृशो लोको भोगहेतुः पुत्रः । तस्मादाश्रमेभ्योऽप्याधिक्येन पुत्रेच्छा कर्तव्या । यद्यपि हरिश्चन्द्र एवाऽत्र प्रष्टा तथाऽपि तेन सह ऋषीणां बहूनां सभायामवस्थानाद्ब्रह्माण इति संबोधनम्—इति ( ऐत. ब्रा. आन. पृ. ८३७ । )　　२. लोको लोकजन्यं सुखमपुत्रस्य नास्ति । न हि पुत्रदर्शनेन यत्सुखं तदन्यदर्शनेन क्वचिदपि दृश्यत इति यदस्ति तत्सर्वे गोमहिष्यादयो जानन्ति यस्मात्तस्मादेव कारणात्पशुजातौ जातः पुत्रो वत्सः स्वकीयां मातरं भगिनीं वा पुत्रोत्पादनार्थमधिरोहति ( ऐत. ब्रा. आन. पृ. ८३९ ) ।

इत्यप्पदीक्षितकृतौ मध्वशास्त्रमुखार्दने ।
दृष्ट्वा सन्तोऽनुगृह्णन्तु चतुर्थनयदूषणम् ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजि-श्रीरङ्गराजाध्वरीन्द्रसूनोः चतुरधिकशतप्रबन्धनिर्माणचणस्य श्रीमदप्पयदीक्षितेन्द्रस्य कृतिषु मध्वतन्त्रमुखमर्दनव्याख्याने **मध्वमतविध्वंसने** समन्वयाधिकरणदूषणाख्यं चतुर्थं प्रकरणम् ॥

एवमुपक्रमादिलिङ्गैः पुराणाद्युपबृंहणैश्च सृष्ट्यादिश्रुतीनां विष्णौ व्यवस्थितत्व-सिद्धिरिति दर्शितम् । इदानीं परमतेऽपि विष्णुपरत्वमेव तासां कथञ्चिदपि न सिध्येदिति दर्शयितुमीक्षत्यधिकरणव्यवस्थापनीयत्वेन पराभिमतं ब्रह्मणो वाच्यत्वं दूषयति—

**न ध्येयं ब्रह्म 'नेदं यदिद' मिति गिरा ह्यभ्युपेतं त्वयाऽतो**
**ध्येयार्थानां श्रुतीनां क्वचिदपि न च तद्वाच्यमित्यभ्युपेयम् ।**
**नो चेन्न ध्येयमेतत्कथमिव भवति स्यादवायैव शङ्का**
**यद्वा चेति श्रुतिश्च क्षिपति तदसनायैव वाच्यत्वमस्य ॥ ५२ ॥**

त्वया तावदत्यन्तमेवाऽव्यक्तं ब्रह्मेत्यभ्युपगम्य तस्य तदव्यक्तत्वमाक्षेपसमाधानाभ्यां स्थापितम् (१)"तथान्यप्रतिषेधादि"त्यधिकरणे । तदित्थम्—यदुक्तं "तदव्यक्तमाह ही" (२)त्यधिकरणे नित्याव्यक्तं ब्रह्मेति तदयुक्तम् । उपासकानां हृदयेष्वाविर्भूयोपासनाकाले तस्य स्फुरणात् । न हि परमात्मनोऽन्यदुपास्यम् । तदन्योपासनेन मुक्त्ययोगात् । न चोपासनाकाले तत्तद्धृदयस्थिततया प्रतीतस्य ब्रह्मत्वेन तत्तदुपासकबहुत्वेन तत्तद्बहुत्वापत्तिर्दोषः । स्वरूपभेदाभावेऽपि ब्रह्मरूपाणां विशेषबलेन नानात्वोपपत्तेरिति पूर्वपक्षे राद्धान्तः—यदा जीवानन्दादेरन्यद्ब्रह्म तथोपासनाकाले प्रतीतादपि "यन्मनसा न मनुते येनाऽहुर्मनो मतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति श्रुतौ ब्रह्मण उपास्यत्वप्रतिषेधात् । जीवानन्दादिषु अल्पत्वस्येवोपासनाकाले प्रतीतेऽपि व्यक्तत्वादेर्भेदहेतोस्सत्वाच्च । तस्मादुपासकानां हृदयेषु ब्रह्मणः प्रतिबिम्बविशेष एवोपासनालम्बनम् । तदुपसानयैव च प्रतिमोपासनयेव तद्गतं ब्रह्म प्रसन्नं सदव्यक्तमप्यचिन्त्यापरिमितस्वशक्तिबलादपरोक्षीभवतीति युक्तम् ।

१. वे. सू. ३. २. ३७ अधि. १८. । २. वे. सू. ३. २. २३. अधि. १४ ।

तथैव **ब्रह्मतर्कवचनम्**—

(१) पश्यन्ति परमं ब्रह्म चित्ते यत्प्रतिबिम्बितम् ।
ब्रह्मैव प्रतिबिम्बे यदतस्तेषां फलप्रदम् ॥
तदुपासनं च भवति प्रतिमोपासनं यथा ।
दृश्यते (२)त्वापरोक्ष्येण ज्ञानेनैव परं पदम् ॥ इति ।

तस्माद्युक्तमव्यक्तत्वं ब्रह्मण इति । एवमनुपास्यं ब्रह्मेत्यङ्गीकुर्वता त्वयोपासनाविधिप्रकरणेषूपास्यसमर्पकाणां श्रुतिवचनानां तद्वाच्यं न भवतीत्यप्यङ्गीकरणीयम् । तद्वाच्यत्वाङ्गीकारे कथं तदनुपास्यमिति शङ्काया अनिवार्यत्वात् । न हि सम्भवत्युपासनाविधिषूपास्यसमर्पकैः पदैः ब्रह्मोपास्यतया विधीयते उपास्यं च न भवतीति । एतच्छङ्कानिरसनार्थैव हि "यन्मनसा न मनुत" इति मन्त्रसन्निधावाम्नायमानं—

"यद्वाचाऽनभ्युदितं येन वागभ्युद्यते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत"

इति मन्त्रान्तरं ब्रह्मणो वाच्यत्वं प्रतिक्षिपति । तेन हि सर्ववागविषयभूतं ब्रह्मोपासनाविधिप्रकरणेषु "सर्वं खल्विदं ब्रह्म" त्यादिवाक्यश्रुतानां उपास्यसमर्पकाणां ब्रह्मादिपदानामप्यर्थो न भवतीति प्रदर्शनेनैषा शङ्का निरस्ता भवतीति । तस्मादवाच्यमिति त्वयाऽभ्युपगन्तव्यम् । अनुपास्यं त्वदीयं ब्रह्म सृष्ट्यादिवाक्यस्थब्रह्मात्मनारायणादिपदानामपि वाच्यं न भवेदिति न तस्य जगत्कर्तृतादिसिद्धिरिति भावः ॥ ५२ ॥

नन्वेतावता ध्यानविधिवाक्येषु ध्येयसमर्पकाणां पदानां ब्रह्म प्रतिपाद्यं न भवतीत्यापतितम्, न तु सृष्टिवाक्येषु स्रष्टृसमर्पकाणामपि तेषां तत्प्रतिपाद्यं न भवतीति । उपास्यसमर्पकपदाप्रतिपाद्यत्वमात्रेण तस्याऽनुपास्यत्वनिर्वाहात् । तन्निर्वहणाय प्रवृत्तस्य "यद्वाचे" ति मन्त्रस्याऽपि तावन्मात्रविषयत्वोपपत्तेः । न च वाच्यमुपासनाविधिषूपास्यसमर्पकाणि यानि ब्रह्मनारायणादिपदानि तान्येव सृष्टिवाक्येषु स्रष्टृसमर्पकाणि । अतस्तेषां ब्रह्म क्वचिद्वाच्यं न भवतीति निर्णयेऽन्यत्राऽपि तद्वाच्यं न स्यादिति । प्रसिध्यनुसारेण विष्ण्वाख्यस्य ब्रह्मणस्तद्वाच्यत्वेऽपि उपासनाविधिषु तेषामनुपपत्त्या वाच्यार्थमपहाय तत्प्रतिबिम्बलक्षकत्वोपपत्तेरित्याशङ्क्याऽऽह—

**ध्येयार्था एव वाच्यास्तव निगमगिरस्स्रष्टृतादीन्वदन्त्य-**
**स्त्वं हि ध्यानैकनिष्ठां गुणगणभणितिं ब्रह्मणो वक्ष्यशेषाम् ।**

---

१. कारिके इमे मध्वभाष्यस्थे ( १३४. १. ४. म. भा. ) २. अपरोक्षेण इति ग. पु. ।

तत्तासां ब्रह्मणस्स्यात्प्रतिफलनभिदा काऽपि वाच्या मते ते
यद्वा चेत्येवमाद्यैः कतिपयवचनैर्ब्रह्म शुद्धं तु लक्ष्यम् ॥ ५३ ॥

इति श्रीमदप्पयदीक्षितेन्द्रकृतिषु मध्वतन्त्रमुखमर्दने
पञ्चमाधिकरणदूषणम् ॥

त्वन्मते स्रष्टृत्वादिप्रतिपादकान्यप्युपास्यसमर्पकाण्येव वाक्यानि । त्वया सर्वत्राऽपि ब्रह्मगुणवर्णनं उपासनार्थमेवे(१)"त्याध्यानाय प्रयोजनान्तराभावादि"त्यधिकरणे व्यवस्थापितत्वात् । तत्र हि सद्विद्याभूमविद्यादहरविद्यावैश्वानरविद्यादिषु सर्वासु विद्यासु ब्रह्मगुणवर्णनं सर्वविद्योक्तगुणोपसंहारेणोपसना कर्तव्येत्यत्र प्रमाणम् । अन्यथा वैयर्थ्यादित्युपसंहाराधिकरणोक्तमयुक्तम् । तासु ब्रह्मगुणवर्णनस्य तत्तद्गुणकश्रवणद्वारा जनलोकादिफलविशेषार्थत्वोपपत्तेः । उपासनार्थश्चेत्सर्वगुणानामेकत्रैवोक्तिप्रसङ्गेन प्रकरणभेदायोगादित्याक्षिप्य समाहितम्—सर्वास्वपि ब्रह्मगुणवर्णनस्योपासनार्थतया निःश्रेयसरूपमहाफलप्रयोजनं चेत्सम्भवति जनलोकादिक्षुद्रफलप्रयोजनत्वायोगात्,

(२)"गुणास्सर्वेऽपि वेत्तव्या ध्यातव्याश्चैव सर्वशः ।
नाऽन्यत्प्रयोजनं मुख्यं गुणानां कथने भवेत् ॥"

इति ब्रह्मतन्त्रवचनात् । विप्रकीर्णान्ब्रह्मगुणान्यत्नेनोपसंहृत्योपासीनस्य तदनुसारेण मुक्तावानन्दातिशयो भवेदिति तद्दौर्लभ्याय बहुषु प्रकरणेषु विप्रकीर्णतया गुणवर्णनोपपत्तेश्च सर्वमपि ब्रह्मगुणवर्णनमाध्यानार्थमेवेति सर्वविद्योक्तगुणोपसंहारः कर्तव्य इति (३)निरूपितम् । तस्मात् स्रष्टृत्वादिप्रतिपादकानां श्रुतिपुराणेतिहासागमादीनां सर्वेषामप्युपास्यत्वेन त्वदभिमते ब्रह्मप्रतिबिम्बविशेष एव पर्यवसानं स्यादिति तत्रैव वाक्यशेषादिभिः यूपाहवनीयादिन्यायेन प्राप्तव्युत्पत्तिकानां ब्रह्मनारायणादिपदानां शक्तिस्स्यात् । अन्येषां वादिनां साक्षाद्ब्रह्मण्येव ब्रह्मनारायणादिपदानां शक्तिरित्यभ्युपगमस्य तदेव सृष्टिवाक्यादिप्रतिपाद्यमिति भ्रममूलत्वेन भ्रान्तित्वोपपत्तेः ।

न चैवं सति "तदेव ब्रह्म त्वं विद्धि" इत्यादिष्वपि ब्रह्मपदादीनां बिम्बभूत-

१. वे. सू. ३. ३. १५. अ. ८ । २. कारिकेयं मध्वभष्ये १३७. १. १० ।
३. अत्र **मध्वभाष्यम्**—"आध्यानार्थं हि सर्वे गुणा उच्यन्ते । प्रयोजनान्तराभावात् । "ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणा । ज्ञातव्याश्चैव ध्यातव्या गुणास्सर्वेऽप्यतो हरेः । नाऽन्यत्प्रयोजनं ज्ञानाद्ध्यानात्कर्मकृतेरपि । श्रवणाच्चाथ पाठाद्वा विद्यादिः किञ्चिदिष्यते" इति परमसंहितायाम् । इति ( म. भ. १३६. १. ६. ) ।

ब्रह्मविषयत्वाभावापातः। प्रतिबिम्बवाचिनां तेषां लक्षणया तत्र ब्रह्मविषयत्वोपपत्तेः। न च तत्र वैपरीत्यं शङ्कनीयम्। बिम्बविषयाणि ब्रह्मादिपदानि मुख्यानि। प्रतिबिम्बविषयाणि लक्षकाणीति प्रायस्सर्वेषां श्रुतिपुराणादीनामुपास्यस्रष्टृत्वपालकत्वसंहर्तृत्वान्तर्यामित्वशौर्यौदार्यादिगुणवर्णनपरतया प्रतिबिम्बविषयत्वावश्यंभावेन तेषां भूयसां लक्षकत्वकल्पनाया अयुक्तत्वात्। "यन्मनसा न मनुते" "यतो वाचो निवर्तन्ते" "एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत" इत्यादीनां त्वदभिमतवीक्षणीयबिम्बभूतब्रह्मविषयाणां कतिपयवचनानामेव लक्षकत्वकल्पनस्योचितत्वात्। तस्मादित्थमत्र तव मतं पर्यवस्येत्—वाङ्मनसपथातीतं नित्याव्यक्तमुपासनानन्तरं मुच्यमानानां मुक्तानां च साक्षात्कारस्यैव विषयभूतं परं ब्रह्म "तदेव ब्रह्म त्वं विद्धि" इत्यादिभिश्च कैश्चिदेव वचनैर्लक्षणया प्रतिपाद्यम्। तस्य ब्रह्मप्रतिबिम्बविशेषस्तु जीववदनादिः कर्तृत्वादिमानुपासकहृदयेषूपास्यरूपेणाऽभिव्यक्तिशाली सृष्टिश्रुत्यादिभिस्तदनुसारिपुराणादिभिश्च शक्त्या प्रतिपाद्यत इति।

एवं च यद्यपि त्वदन्ये सगुणब्रह्मवादिनः स्वस्वाभिमतब्रह्मणि सृष्टिश्रुत्यादीनामुपक्रमादिकं योजयेयुः, तथाऽपि त्वन्मते तासां स्वोपक्रमादीनां स्वोपबृंहणानां त्वदभिमतब्रह्मप्रतिबिम्बमेव वाच्यं वक्तव्यमासीदिति ब्रह्मणि तव तद्योजनमत्यन्तनिरालम्बनमेवेति भावः॥ ५३॥

मध्वशास्त्रमुखमर्दने मनागप्पदीक्षितकृताविदं बुधाः।
पश्यत प्रणयवश्यचेतसः पञ्चमाधिकरणस्य दूषणम्॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरीन्द्रसूनोः चतुरधिकशतप्रबन्धनिर्माणचणस्य श्रीमदप्पयदीक्षितेन्द्रस्य कृतिषु मध्वतन्त्रमुखमर्दनव्याख्याने **मध्वमतविध्वंसने** ईक्षत्यधिकरणदूषणं नाम पञ्चमं प्रकरणम्॥

एवं परमतमर्यादयैव तदीयपञ्चाधिकरणीदूषणं प्रतिज्ञातं निर्व्यूढमित्युपसंहरन्ननेनैव दूषणेनाऽग्रिमाधिकरणानामपि दुष्टत्वान्न पृथग्दूषणमिह क्रियत इत्याशयेनाऽऽह—

**इत्थं त्वत्क्लृप्तयैव प्रतिहतिमयति न्यायमर्यादया ते**
**शास्त्रस्याऽप्यन्तरङ्गे मुखनयनिकटे दूषणीयं किमग्रे ?।**
**तेनैवाऽग्रे नया हि स्फुटमतिशिथिलास्ते यदि स्युस्समर्थाः**
**त्वद्दृश्यैर्वेदवाक्यैर्जहिहि जड ! तदा न्यायचिन्तां दुरन्ताम्॥५४॥**

त्वया हि पञ्चाधिकरण्यनन्तरस्य प्रथमाध्यायशेषस्य प्रवृत्तिरित्थमुपपादिता (१)"तत्तु समन्वयादि"ति विष्णोश्शास्त्रगम्यत्वेनोपक्रमादितात्पर्यलिङ्गसमन्वयस्सिद्धवदुपन्यस्तः। न तु तत्रोपक्रमादिर्विष्णावेव व्यवस्थित इति न्यायैस्स्थापितम्। तद्यावत् तत्तद्वाक्यविशेषानुदाहृत्य पूर्वोत्तरपक्षप्रथनेन समन्वयो न प्रपञ्च्यते तावदयमनुपन्यस्तप्राय एव। अन्यथा शैवादयोऽपि समन्वयादित्येव सिद्धवद्धेतुमुपन्यस्य शिवादीनां शास्त्रगम्यत्वं प्रसाधयेयुः। अतस्समन्वयविभागेन तत्प्रपञ्चनार्थमध्यायशेष आरभ्यत इति तत्रोपरितनेषु सर्वेष्वधिकरणेषु विष्णौ समन्वयप्रपञ्चनरूपस्सिद्धान्तः सृष्ट्यादिप्रतिपादकवाक्यरूपशास्त्रप्रतिपाद्यत्वं विष्णोर्न सम्भवतीति पञ्चमाधिकरणदूषणेन ग्रस्तो नोन्मज्जनमर्हतीति स्पष्टमेव। तत्तद्वाक्यानां तत्तदधिकरणपूर्वपक्षोपपादितदेवतान्तरपरत्वस्य निराकरणमप्यनुपपन्नम्। विष्णौ समन्वितानामपि तत्तद्वाक्यानां तृतीयचतुर्थाधिकरणदूषणोक्तरीत्या देवतान्तरपरत्वस्याऽपि सम्भवादित्यपि स्पष्टमेव।

यद्यपि तत्तदधिकरणविषयवाक्येषूपक्रमोपसंहारादिगतानां विष्णुविषयश्रुतिलिङ्गानां निरवकाशत्वेन प्राबल्यं, देवतान्तरविषयश्रुतिलिङ्गानां विद्वद्रूढ्या महायोगेन प्रवृत्तिनिमित्ततादधीन्येन तत्तदन्तर्यामिगतत्वेन च विष्णौ सावकाशत्वेन दौर्बल्यं च तत्तदधिकरणेषु त्वयोपपादितम्, देवतान्तरविषयश्रुतीनां विद्वद्रूढ्यादिभिर्विष्णौ परं मुख्यतया प्राबल्यं प्रसिद्धार्थेष्वज्ञरूढ्या केवलयोगेन प्रवृत्तिनिमित्ताश्रयत्वेन च मुख्यमात्रतया दौर्बल्यं चोपपादितम्, तथाऽपि न प्रबलं प्रबलमित्येव बाधकं दुर्बलस्य। बलमात्रस्याऽनुज्जीवनप्रसङ्गात्। किन्तु सति विरोधे। न च त्वन्मते श्रुतिवाक्यानामनेकार्थत्वे विरोधोऽस्तीत्यसकृदावेदितं न प्रस्मर्तव्यम्।

अपि च विद्वद्रूढ्यादयस्तव विष्णौ कुतो व्यस्थितास्सिद्धाः? येन देवतान्तरविषयश्रुतिलिङ्गानां विष्णौ सावकाशत्वेन प्रसिद्धेषु स्वस्वार्थेषु परममुख्यत्वाभावेन च दौर्बल्यं भवेत्। विष्णुरेव जगत्कर्तृ परं ब्रह्मेति सावधारणनिश्चयाधीना हि तत्तद्व्यवस्थितत्वसिद्धिः। अन्यथा विरिञ्च एव विद्वद्रूढ्यादय इति वक्तारं को वारयेत्?

तथा हि—(२) "आनन्दमयोऽभ्यासादि"त्यधिकरणे जगत्कर्तृत्वादिना प्रतिपादितोऽन्नमयादिर्विष्णुरेवेति साध्ये ब्रह्मशब्दाभ्यासं हेतूकृत्य ब्रह्मशब्दस्य यद्यप्यन्यत्राऽपि रूढिरस्ति तथाऽपि तस्य विष्णौ "तदेव ब्रह्म परमं कवीनां" इति श्रुत्युपदर्शितविद्वद्रूढिः प्रबलेति सैव निर्णयहेतुरिति त्वयोक्तम्। तत्र तदेव ब्रह्मेति श्रुतिः विष्ण्वेकपरेति

१. वे. सू. १. १.४। २. वे. सू. १.१.१२. **अनुव्याख्या**—"रूढिमित्येव साध्यं स्याद्रूढिर्हि द्विविधा मता। अविद्वद्विद्वदाख्यैव मुख्या हि विदुषां तु सा। विद्वद्रूढिका स्यात्सा योगादेव लभ्यते।" इति। ( अनु.१७०.१.६. )। वैदिकबहुलप्र-

कुतोऽवसेया ? "यमन्तस्समुद्रे कवयो वदन्ती"ति प्रसिद्धतल्लिङ्गादिति चेत्, न; "प्रजापतिश्चरति गर्भे अन्तः" "हिरण्यगर्भ इत्यष्टावि" ति प्रजापतिहिरण्यगर्भश्रुतिभ्यां विरिञ्चैकपरा कुतो नाऽवसेया ? कुतश्च "हिरण्यगर्भ इत्यष्टावि" त्यनेन गृहीतात् "य ईशे अस्य द्विपदश्चतुष्पद" इति पशुपतित्वलिङ्गात् "पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमही" त्याद्युपसंहाराच्च सा शिवैकपरा नाऽवसेया ? । तस्मादेतादृशविषयवाक्येषु नानादेवत्यश्रुतिलिङ्गानां बलाबलविवेचनेन व्यवस्थितैकदेवतापरत्वमन्यैर्व्यवस्थापनीयम् । त्वया तु सर्वश्रुतिलिङ्गानुग्रहलाभाय तावद्देवतापरत्वमेवोपगन्तव्यम् । श्रुत्यर्थानैकान्त्यवादिनस्तव तत्तद्देवताविषयश्रुतिलिङ्गानां मुख्यार्थमपि परिगृह्य सर्वविषयत्वाङ्गीकारसम्भवे किञ्चिदनुरोधेन कस्यचित्प्रसिद्धार्थपरित्यागायोगात् ।

ननु तथा सति तत्तद्विषयवाक्यगतब्रह्मशब्दानामप्यनेकार्थत्वस्य वक्तव्यतया "तदेव ब्रह्म परमं कवीनामि" त्यवधारणं न घटत इति चेत्, न; तस्य त्वन्मते भूमशब्दरीत्या पुरुषभेदेन व्यवस्थितार्थबोधकत्वसम्भवात् ।

ननु कथमिह प्रजापतिरपि ब्रह्मशब्दार्थस्स्यात् ? "ते ये शतं प्रजापतेरानन्दाः। स एको ब्रह्मण आनन्दः" इति ब्रह्मप्रजापत्योरानन्दोत्कर्षापकर्षश्रवणादिति चेत्—न; "ब्रह्मपुच्छं प्रतिष्ठे"ति ब्रह्मानन्दयोरवयवावयित्वश्रवणेऽपि आनन्दमयस्येव प्रजापतेरपि ब्रह्मत्वोपपत्तेः । त्वया ब्रह्मानन्द एव तारतम्यवदत्यन्तविशेषवत्त्वस्याऽङ्गीकृतत्वेन एकस्मिन्नुत्कृष्टापकृष्टानन्दवत्वं न संभवतीति वक्तुमशक्यत्वाच्च । "अन्योऽन्तर आत्मा (१)प्राणमय" इत्यादिसाक्षाद्भेदश्रवणमविगणय्याऽन्नमयादीनामभेदमङ्गीकुर्वतस्तव भेदकश्रवणस्याऽत्यन्तमविगणनीयत्वाच्च ।

एतेनाऽग्रिमाधिकरणविषयवाक्येष्वपि तत्तत्प्रतिपाद्यत्वेन पूर्वपक्ष्यभिमतदेवतातो भेदव्यपदेशेन भेदकव्यपदेशेन वा तस्य तस्य विषयवाक्यस्य तत्तद्देवतापरत्वनिराकरणमपि (२)प्रत्याख्यातम् । त्वन्मतेऽन्नमयादिष्विव ब्रह्मानन्दमययोरिव च भेदाभेदकव्यपदेशयोरुपपन्नतया तत्तद्देवताविषयप्रसिद्धश्रुतिलिङ्गादिस्वारस्यानुरोधेन तस्य तस्य विषयवाक्यस्य पूर्वपक्ष्यभिमततत्तद्देवतापरत्वस्याऽप्यनिवार्यत्वात् ।

अन्यश्चाऽयमग्रिमाधिकरणानां विष्णावेव तत्तद्विषयवाक्यसमन्वय इत्यस्याऽर्थस्य व्यवस्थापकानां निराकरणसंक्षेपः—प्रायस्सर्वेष्वपि तेष्वधिकरणेषु साधारणेन ब्रह्मलिङ्गादिना विष्णुपरत्वनिर्णयः पूर्वपक्ष्यभिमततत्तद्देवताविषयश्रुतिलिङ्गानां प्रवृत्तिनिमित्त-

योगानुमिता हि विद्वद्रूढिरित्युच्यते । सा च लौकिकमात्रप्रयोगानुगतायाः रूढेर्मुख्यैवेति स्फुटमेव । इति न्या. सु. १४५. २. १३ ।

१. आनन्दमयः इति ख. पु. । २. व्याख्यातमिति. घ. पु. ।

तादधीन्यादिभिः सावकाशत्वेन निराकरणमिति । दृश्यते च यथा(१) "आकाशस्तल्लिङ्गादि"त्यधिकरणे "अस्य लोकस्य का गतिरित्याकाश इति होवाचे"त्यादिविषयवाक्यस्य "स एव परो वरीयानुद्गीथः स एषोऽनन्त" इत्यादिवाक्यशेषश्रुतपरोवरीयस्त्वादिसाधारणब्रह्मलिङ्गेन विष्णुपरत्वनिर्णयः। आकाशश्रुतेस्तत्प्रवृत्तिनिमित्ततादधीन्यादिना विष्णुवाचकत्वसंभवेन सावकाशतया निराकरणम् ।

तथा(२) "ज्योतिश्चरणाभिधानादि" त्यधिकरणे (३)"वि मे कर्णा पतयतो विचक्षुवींदं ज्योतिर्हृदय आहितं यत्" इति मन्त्रस्य करणादिविरुद्धचरणेन कर्णाद्यपरिच्छेद्यवैभवत्वरूपेण साधारणेन ब्रह्मलिङ्गेन विष्णुपरत्वनिर्णयः । तत्तन्मन्त्रगतज्योतिःश्रुतेर्ज्योतिःप्रकरणसंपादकतत्पूर्वापरमन्त्रगताग्न्यादिश्रुतीनाञ्च पूर्ववद्विष्णौ सावकाशतया निराकरणञ्च । (४) "छन्दोऽभिधानादि" त्यधिकरणे "गायत्री वा इद ँ सर्वं भूतं" इत्यादिविषयवाक्यगतस्य गायत्रीशब्दस्य गानत्राणकर्तृत्वादिसाधारणब्रह्मलिङ्गादिभिर्विष्णुपरत्वनिर्णयः। गायत्रीश्रुतेः पूर्ववद्विष्णौ सावकाशतया निराकरणञ्च। (५)"प्राणस्तथाऽनुगमा" दित्यधिकरणे "ता वा एताश्शीर्षन् श्रिताः चक्षुश्श्रोत्रं मनो वाक् प्राण" इत्याद्यैतरेयब्राह्मणे श्रुतस्य प्राणशब्दस्य (६)"तं देवाः प्राणयन्त । तं भूतिरिति देवा उपासांचक्रिरे" इत्यादिवाक्यश्रुतदेवोपास्यत्वादिसाधारणब्रह्मलिङ्गैर्विष्णुपरत्वनिर्णयः । तत्र यन्मुख्यप्राणलिङ्गं "अहिंसन्त अहमुक्थ्यं अहमुक्थ्यमस्मीति प्राण उदक्रामदि" त्यादौ श्रुतमिन्द्रियैस्सह कलह उत्क्रमणं प्रवेश इत्यादिश्च । तत्र "त्वामेव विजानीयामि" ति पृष्टवन्तं विश्वामित्रं प्रति "प्राणो वाऽहमस्मि" इतीन्द्रियवचनं तत्सर्वमन्तर्यामिविषयतया सावकाशमिति निराकरणञ्च ।

एवं द्वितीयपादाद्यधिकरणेष्वपि तत्तद्विषयवाक्यानां साधारणब्रह्मलिङ्गादिभिः विष्णुपरत्वनिर्णयः । अन्यविषयश्रुतिलिङ्गानां सावकाशतया निराकरणमित्येतदेव प्रायिकम् । तत्र सर्वत्राऽपि साधारणब्रह्मश्रुतिलिङ्गानां विष्ण्वेकविषयत्वं अन्यविषयश्रुतिलिङ्गानां प्रवृत्तिनिमित्ततादधीन्यादिभिः विष्णावेव सावकाशत्वमित्येतदद्याऽप्यसिद्धम्, शिवादिविषयत्वमपि सम्भवतीति शङ्काग्रस्तत्वात् । तन्निराकरणार्थमेव त्वया प्रथमाध्या-

१. वे. सू. १. १. २२. अधि. ८. म. भा. ८९. २. १० । २. वे. सू. १. १. २४. अधि. १०. म. भा. ९०. १. ८ । ३. विमेमनश्चरति दूर आधीः किंस्विद्वक्ष्यामि किमु नू मनुष्ये" इति मन्त्रशेषः। ४. ५. ११. ६. ऋ. सं. । ४. वे. सू. १. १. २५. अधि. ११. म. भा. ९०. १. ९. । ५. वे. सू. १. १. २८ अधि. १२. म. भा. ९०. २. १० । ६. "तं देवाः प्राणयन्त स प्रषोऽसुः स एषः प्राणः। प्राण ऋच इत्येव विद्या। तदयं प्राणोऽधितिष्ठति" इत्याद्यनुगमादत्राऽपि प्राणो विष्णुरेव। म. भा. ९०. २. ११।

यशेषस्याऽऽरब्धत्वात् । तथा चोपक्रान्तसाधनीयार्थविस्मरणेन सर्वत्र तस्यैव हेतूकरणमत्यन्तमयुक्तमिति स्पष्टमेव ।

द्वित्रेष्वधिकरणेषु त्वया विष्णुसाधारणश्रुतिलिङ्गानि सन्तीति लिखित्वा तैर्निर्णयः कृतोऽपि दृश्यते । यथा (१)'अन्तस्तद्धर्मोपदेशादि'त्यधिकरणे "अन्तः प्रविष्टं कर्तारमेतम् । अन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवाः । इन्द्रस्याऽऽत्मानं शतधा चरन्तम्" इत्यादिमन्त्रगतस्याऽन्तःप्रविष्टशब्दस्य विष्णुपरत्वे(२) "अन्तस्समुद्रे मनसा चरन्तम्"। (३)"यस्याऽण्डकोशं शुष्ममाहुः प्राणमुल्बं" इति समुद्रशायित्वब्रह्माण्डवीर्यत्वरूपं विष्णुलिङ्गमस्तीति । यथा वा (४)"अत एव प्राण" इत्यधिकरणे "तद्वै त्वं प्राणो अभवः । महान्भोगः प्रजापतेः । भुजः करिष्यमाणः । यद्देवान्प्राणयो नवे"ति प्राणशब्दस्य विष्णुपरत्वे "श्रीश्च ते लक्ष्मीश्च पत्न्यावि"ति तत्पूर्वानुवाकश्रुतं लक्ष्मीपतित्वलिङ्गमस्तीति । यथा वा (५)"शब्दादेव प्रमित" इत्यधिकरणे—

"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य स एवाऽद्य स उ श्वः ॥"

इति मन्त्रे श्रुतस्याऽङ्गुष्ठमात्रशब्दस्य विष्णुपरत्वे—

"ऊर्ध्वं प्राण उन्नयत्यपानं प्रत्यगस्यति ।
मध्ये वामनमासीनं विश्वे देवा उपासत ॥"

इति मन्त्रश्रुतवामनश्रुतिरस्तीति । अत्र समुद्रशायित्वादिविष्णुलिङ्गप्रतिद्वन्द्वि "अन्तश्चन्द्रमसि मनसा चरन्तं" "अन्तरादित्ये मनसा चरन्तं" इत्यष्टमूर्तेश्शिवस्याऽपि लिङ्गमस्तीति विष्णुपरत्वलिङ्गप्रतिपन्थिनी "प्रजापतिश्चरति गर्भे अन्तः" इति प्रजापतिश्रुतिरस्ति वामनश्रुतिप्रतिपक्षभूता ईशानश्रुतिरस्तीति कुत उदाहृतश्रुतिलिङ्गै-

---

१. वे. सू. १. १. २० अधि. ८ । २. "सुवर्णं धर्मं परिवेदवेनम् । इन्द्रस्याऽऽत्मानं दशधा चरन्तम् । अन्तस्समुद्रे मनसा चरन्तं । ब्रह्मान्वविन्दद्दशहोतारमन्ये" तै. आ. प्र. ३. अनु. ११ दशकं १. । ३. यस्याण्डकोशं शुष्ममाहुः प्राणमुल्बम् । तेन कौप्तोऽमृतेनाऽहमस्मि । सुवर्णं कोश ँ रजसा परीवृतम् । देवानां वसधानीं विराजम् । ( तै. आ. प्र. ३. अनु. ११. दशकं ४. ) अत्र **सुधा**—समुद्रान्तस्थितत्वब्रह्माण्डवीर्यत्वब्रह्मतपोलब्धत्वादिधर्मोपदेशात् । तेषां च विष्णुधर्मत्वेन श्रुतिस्मृतिसिद्धत्वात् । न चेन्द्रादिश्रुतिलिङ्गविरोधः । निरवकाशलिङ्गपदेन तद्बाधोपपत्तेः । न्या. सु. १४७. १. ४. । ४. वे. सू. १. १. २३. अधि. ९. । ५. वे. सू. १. ३. २४. अधि. ७. अत्र **मध्वभाष्यम्**—वामनशब्दादेव विष्णुरिति प्रमितः । तच्च लिङ्गं विष्णुरेव । तस्यैव प्राणत्वोक्तेः—तद्वै त्वं प्राणो अभव इति । ( म. भा. ९९. २. ६. । )

र्विष्ण्वेकपरत्वनिर्णयः ? श्रुत्यर्थानैकान्त्यवादिनस्तव विष्णुपरत्वेन योजनायां शिवादिश्रुतिलिङ्गानामन्यथानयनवच्छिवादिपरत्वेन योजनायां विष्णुश्रुतिलिङ्गानामप्यन्यथानयनसम्भवात् ।

न च कठवल्लीमन्त्रे ईशानशब्दो भूतभव्यस्येति पदसमभिव्याहाराद्भूतभव्यप्रतियोगिकेशितृत्वपरो न तु शिवे रूढिमानिति वाच्यम् । तथा सति वामनशब्दोऽपि प्राणापानमध्यस्थतोक्त्या पूर्वापरमन्त्रेषु बहुधाऽङ्गुष्ठमात्रतोक्त्या च ह्रस्वत्वपरो न तु विष्णौ रूढिमानिति त्वदभिमतश्रुतेरपि हानिप्रसङ्गात् । यथा चेशानशब्दः शिवे रूढिमानेव, यथा च समुद्रशायित्वब्रह्माण्डवीर्यत्वलक्ष्मीपतित्वादिलिङ्गानि न भवन्ति तथा समर्थितं चाऽस्माभिः(१) **शिवतत्त्वविवेके** ।

यत्तु त्वया चतुर्थपादे प्रवृत्तिनिमित्ततादधीन्यादिना सर्वशब्दानां विष्णौ परममुख्यत्वोपपादनं तदेव शिवस्य प्रजापतेश्चाऽन्तर्यामित्वे तयोरेव सर्वशब्दानां परममुख्यत्वोपपादनमिति न तेन समन्वयस्य विष्णौ व्यवस्थितत्वसिद्धिः । परन्तु प्रवृत्तिनिमित्तताधीन्यादिकथैवाऽवितथा । तथा हि—यस्य शब्दस्य प्रवृत्तिनिमित्तं यदाश्रितं तस्यैवाऽर्थस्य स शब्दो वाचक इति न नियमः । किन्तु यस्य शब्दस्य प्रवृत्तिनिमित्ततयाऽऽश्रितत्वेन यथेष्टविनियोक्तृत्वरूपस्वातन्त्र्यविषयत्वेन वा यदधीनं तस्याऽर्थस्य स शब्दो वाचक इति । अत एव भृत्यगतस्य जयस्य राजानाश्रितत्वेऽपि तदधीनत्वमात्रेण राजा जयीत्यपि प्रयोगः ।

नचैवं सति रिपुगतदुःखबन्धमरणादीनां राजाधीनत्वमात्रेण राजा दुःखी बद्धो मृत इत्यादिप्रयोगप्रसङ्गः । तत्प्रयोगप्रयोजकसत्वेऽपि राज्ञोऽपि दुःखादियोग्यतया राज्ञि सदेव दुःखादिकमुच्यते इति वा राज्ञि तदानीं दुःखाद्यभावनिश्चयेऽपि तस्मिन्दुःखादिकमसदेवाऽऽरोप्य राजविरुद्धेनोच्यत इति संशयापादकत्वेनाऽमङ्गलतया स्वस्थादिशब्दवत्तदप्रयोगोपपत्तेः । यद्वा स्वातन्त्र्यमात्रं शब्दप्रवृत्तौ न प्रयोजकं, किन्तु स्वगतत्वयोग्यत्वविशिष्टदोषत्वरहितं प्रति स्वातन्त्र्यम् । एवञ्च जयस्य राजगतत्वयोग्यत्वेऽपि दोषत्वराहित्यात्तं प्रति राज्ञस्स्वातन्त्र्ये दयादिशब्दप्रवृत्तौ प्रयोजकम् । दुःखबन्धादीनां राजगतत्वयोग्यत्वाद्दोषत्वाच्च तानि प्रति तस्य स्वातन्त्र्यं दुःखिबन्धादिशब्दप्रवृत्तौ न प्रयोजकम् । तेषां विष्णुगतत्वायोग्यत्वाद्दोषत्वेऽपि तानि विष्ण्वपेक्षया स्वाश्रयत्वयोग्यताविशिष्टदोषत्वरहितानि भवन्तीति तानि प्रति तस्य स्वातन्त्र्यं दुःखिबन्धादिशब्दप्रवृत्तौ प्रयोजकमेव । आश्रयित्वमपि हि न तन्मात्रं प्रयोजकं, धनवोढरि भृत्ये धनाश्रयत्वेऽपि धनीत्यप्रयोगात् ।

१. पूर्वभागे "अपास्य ब्रह्मादीनि"ति त्रयोदशश्लोके ।

एवञ्च 'जीवा एव दुःखिनः' "कार्यकारणबद्धौ ता" वित्यादिश्रुतिगतदुःखिबद्धादिशब्दा जीवगतदुःखबन्धादिस्वतन्त्रस्य विष्णोर्वाचकाः न तु लोके दुःखिबद्धादिशब्दाः रिपुगतदुःखबन्धादिस्वतन्त्रस्य राज्ञो वाचका इति व्यवस्था संघटत इति ।

इदं तावदयुक्तम्—विविधकृष्णप्रतिमानिर्माणचतुरे शिल्पिनि तत्तत्प्रतिमासु कृष्णादिशब्दप्रवृत्तिनिमित्तं कृष्णाद्याकारं प्रति स्वातन्त्र्ये सत्यपि तस्मिन्कृष्णादिशब्दप्रयोगादर्शनात् । न च प्रतिमासु कृष्णादिशब्दाः कृष्णाद्याकारसादृश्येन गौणा एव, न तु वाचका इति न तासु कृष्णाद्याकारः कृष्णादिशब्दप्रवृत्तिनिमित्तमिति वाच्यम् । "इवे प्रतिकृता" वित्यधिकारविहितस्य कन्प्रत्ययस्य "जीविकार्थे चाऽपण्ये" इति लुपि सति कृष्णादिशब्दानां कृष्णादिसदृशाकारप्रतिमावाचकत्वात् ।

न च प्रवृत्तिनिमित्ताश्रयत्वे सत्यपि धनवोढरि भृत्ये धनीति प्रयोगादर्शनात् तदपि शब्दप्रयोगे प्रयोजकं न स्यात् । प्रवृत्तिनिमित्तस्वातन्त्र्यस्याऽपि शब्दप्रयोगप्रयोजकत्वाभावे भृत्ये जयिनि राजनि जयशब्दप्रयोगश्च न स्यादिति वाच्यम् । यत"स्तदस्याऽस्ती"त्यस्मिन्नर्थे विहिता मत्वर्थीयाः प्रत्ययाः स्वभावात्केभ्यश्चित्प्रातिपदिकेभ्योऽस्यास्तीति षष्ठ्यर्थ एव भवन्ति, केभ्यश्चित्तस्मिन्नस्तीति सप्तम्यर्थ एव । षष्ठ्यर्था अपि एकशतं सम्बन्धास्सन्तीति तेभ्यस्तेभ्यः प्रातिपदिकेभ्यस्तत्तत्सम्बन्धविशेष एव भवन्ति केभ्यश्चित्षष्ठ्यर्थे सप्तम्यर्थे च भवन्ति । इयं च व्यवस्था प्रयोगानुसारेण स्वयमेव लभ्यत इति लाघवार्थं "तदस्यास्त्यस्मिन्नि"ति सामान्येन विधानम् । यथा—"पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु" इत्यादिसूत्रेषु हविस्सामिधेनीविशेषादिवाचकानामपि सान्नाय्यधाय्यादिशब्दानां सामान्येन हविराद्यर्थेषु विधानम् । एवञ्च धनप्रातिपदिकान्मत्वर्थीयप्रत्ययाः षष्ठ्यर्थ एव । तत्राऽपि स्वस्वामिभाव एव भवन्तीति न धनवोढरि धनीति प्रत्ययप्रसङ्गः । जयप्रातिपदिकात्तु ते स्वस्वामिभावरूपे षष्ठ्यर्थे आश्रयरूपे सप्तम्यर्थे च भवन्तीति न राज्ञि भृत्ये च जयशब्दप्रयोगानुपपत्तिः ।

यद्वा भृत्यगतजयस्य न फलभाजि राज्ञ्युपचारेण जयिशब्दप्रयोगोऽस्तु । अत एव **माघकाव्ये** (१)द्वितीयसर्गे दृश्यते—

(२) विजयस्त्वयि सेनायाः साक्षिमात्रेऽपदिश्यताम् ।
फलभाजि समीक्ष्योक्ते बुद्धेर्भोग इवाऽऽत्मनि ॥ इति ।

तस्मात्सर्वेषामपि रूढानां यौगिकानां च शब्दानां प्रवृत्तिनिमित्ताश्रयत्वं तत्स्वातन्त्र्यं चेत्युभयमपि वाचकताप्रयोजकमित्येतत्सकललौकिकपरीक्षकव्यवहारविरोधि तुच्छं वचः । न हि स्वस्थादिशब्दानामारोग्यादिमत्सु वाचकत्वे समाने सत्यपि स्वर्गस्थत्वाद्यर्था-

१. द्वितीयसर्गे इति ग. पु. नास्ति । २. माघे द्वितीयसर्गे ५९ तमश्लोकः ।

न्तरप्रयोजकत्वेनाऽमङ्गलत्वात् अप्रयोग इतिवद्रिपूणां मारके राज्ञि मृत्युशब्दस्य वाचके सत्यप्यमङ्गलत्वादेवाऽप्रयोग इति कश्चिदपि मन्यते । एवमादीनि प्रवृत्तिनिमित्ततादधीन्यादिदूषणान्यस्माभिर्ग्रन्थान्तरे वर्णयिष्यन्ते । परकल्पितमर्यादयैव परमतदूषणार्थं प्रवृत्तेऽस्मिन्प्रकरणे न तानि संगृहीतानि ।

इत्थं पञ्चाधिकरणीदूषणार्थं प्रदर्शितयैव त्वन्मतमर्यादया समन्वयाध्यायगताधिकरणानां शैथिल्येन त्वदभिमतस्य विष्णौ व्यवस्थितस्य समन्वयस्याऽसिद्धौ तस्मिन्सम्भावितयुक्त्यादिविरोधनिराकरणार्थानि द्वितीयाधिकरणान्यभित्तिचित्रायमाणान्यचिन्त्याद्भुतमहिम्नि तर्कागोचरे परमेश्वरे युक्तिविरोधान्न परिपन्थीनीति वदतस्तव मते तान्यकाण्डताण्डवरूपाणि चेति तेषां तदुभयोपजीवनेन प्रवृत्तानां साधनफलाध्यायगताधिकरणानां शैथिल्यं स्पष्टमेव ।

यदि त्वेतानि त्वच्छास्त्रगतान्यधिकरणानि त्वद्भाष्ये तत्तदधिकरणेषु स्वनिर्णीतार्थे संवादतयोदाहृतैः त्वदेकदृश्यैः कमठमाठरकौण्ठरव्यादिश्रुतिवाक्यैस्तदुपबृम्हणैश्च समर्थनीयानि तर्हि तवाऽलं न्यायचिन्तनया । त्वन्मतानुसारेणैव परस्परव्याहततया प्रत्यधिकरणमनिःर्यूह्या च । नहि प्रत्यधिकरणं तव न्यायव्युत्पादनव्यसनिताऽस्ति "सम्भृतिद्युव्याप्त्यपि चाऽत" (१)इत्यधिकरणानां वचनमात्रावलम्बनानामपि त्वन्मते दर्शनात् । सम्भृत्यधिकरणे हि सर्वमुमुक्षूणामानन्दो ज्ञानं निर्दोषित्वरूपं सत्वं चेति त्रयो गुणा नियमेनोपास्याः प्रधानफलसिद्धये प्रधानफलस्य मोक्षस्य निर्दोषज्ञानानन्दरूपतया "तं यथा यथोपासते" इति श्रुत्यनुसारेण फलानुसारिगुणोपसंहारावश्यंभावादि(२)"त्यानन्दादयः प्रधानस्ये"त्यधिकरणप्रतिपाद्यत्वेन तवाऽभिमतमर्थं त एव सर्वमुमुक्षूपास्या इत्ययुक्तम् "रक्षा द्यावापृथिवी बिभर्ति" "एष हि सर्वेषु लोकेषु भाति" इति श्रुतयोस्सम्भृतिद्युव्याप्त्योरपि सर्वमुमुक्षूपास्यत्वान्मोक्षे स्वाधमभरणस्य प्रकाशव्याप्तेश्च सर्वापेक्षितत्वेन तयोरपि(३) तत्क्रतुन्यायविषयत्वादित्याक्षिप्य यद्यप्येवं तथाऽपि न ते सर्वोपास्ये ।

(४) देवादीनामुपास्यास्तु भृतिव्याप्त्यादयो गुणाः ।
आनन्दाद्यास्तु सर्वेषामन्यथाऽनर्थकृद्भवेत् ॥

इति किञ्चिद्वचनमेव विलिख्य सिद्धान्तितम् । एवमन्यान्यप्यधिकरणानि उदाह-

---

१. वे. सू. ३. ३. २४. अधि. १४ । २. वे. सू. ३. ३. १२. अधि. ५ । ३. वे. सू. ४. ३. १५ अधि. । ४. सम्भृतिद्युव्याप्ती अपि देवादीनामुपसंहर्तव्ये । नाऽन्येषाम् । अत एव योग्यताविशेषात् । देवादीनामुपास्यास्तु भृतिव्याप्त्यादयो गुणाः । आनन्दाद्यास्तु सर्वेषां अन्यथाऽनर्थकृद्भवेदिति ब्रह्मतर्के । इति. म. भा. १३७. १. १. ।

रणीयानि । तस्माद्धूर्तकल्पितवचनैकावलम्बनं न्यायविधुरमिदं मध्वमतं सूक्ष्मदृशां न सूक्षणीयमिति भावः ॥ ५४ ॥

इत्यप्पदीक्षितेनेदं मध्वोपक्रममक्रमम् ।
तद्रीत्यैव मतं ध्वस्तं संक्षेपेण समन्ततः ॥

इत्थं कृतेन मध्वमतविध्वंसनेनाऽऽत्मनः पौरोभाग्यं परिहरन्नेव तत्र युक्तांशान् गृहीत्वा तैर्जीवब्रह्माभेदसिद्धिं प्रकरणस्याऽस्य तत्वनिर्णयफलकत्वेन वादकथारूपत्वसंपादनीं दर्शयति—

**तस्माद्यत्तेऽनुपास्यं विमलसुखतनुब्रह्मकूटस्थमिष्टं**
**शास्त्रेऽप्यस्मिन्विचार्यं गमितमुपनिषल्लक्ष्यतां मुक्तभोग्यम् ।**
**सोऽसावानन्द एवेत्युचितमसुमतामावृतो यस्त्वयोक्त-**
**स्तद्भेदे नाऽस्ति मानं किमपि निगमतो लाघवेनैक्यसिद्धेः ॥५५॥**

त्वया तावत्परब्रह्मोपासनाविषयादन्यद्विशुद्धसुखरूपं परिणामादिविकाररहितं मुक्तानां भोग्यतया निरतिशयपुरुषार्थरूपमिष्यते । तदेव चाऽस्मिन्शारीरकशास्त्रे विचार्यं त्वयोपेयते । तत्सर्वं युक्तमेव । तथाऽनुपास्यं ब्रह्मोपनिषदां वाच्यं न भवतीति तल्लक्ष्यतां नीतमस्माभिः पञ्चमाधिकरणदूषणे । प्राणिनां च संसारदशायां अविद्यावृतो विशुद्ध आनन्दोऽस्तीति च त्वयोक्तम् । तदपि युक्तमेव । एवञ्च योऽसौ संसारदशायामावृतो जीवानामानन्दस्त्वयेष्यते तदेव विशुद्धसुखरूपं ब्रह्म । न ततोऽन्यदित्यप्यङ्गीकर्तुमुचितम् । उपनिषत्सु जीवब्रह्माभेदोद्घोषणात्तत्रैव तर्काणामानुकूल्याच्च । तथा हि—

ब्रह्मानन्दो देवदत्तजीवानन्दान्न भिद्यते, तं प्रत्यनादिभावावृतत्वात् तद्भोग्यत्वाच्च, देवदत्तजीवानन्दवत् । घटादीनां देवदत्तं प्रति कुड्यादिभावावृतत्वेऽपि ज्ञानप्रागभावरूपानाद्यभावावृतत्वेऽपि अनादिभावावृतत्वं नाऽस्तीति न तेषु व्यभिचारः । अनादिभावश्चाऽविद्यारूपः संसारदशायां जीवानन्दस्य ब्रह्मानन्दस्य च तं प्रत्यावारकस्तवाऽपि सम्मतोऽस्तीति प्रथमाधिकरणदूषणे दर्शितत्वान्न पक्षे हेत्वसिद्धिः । न वा दृष्टान्ते साधनवैकल्यम् । जीवानन्दवद्ब्रह्मानन्दोऽपि मुक्तिदशायामभिव्यक्तो मुक्तानां भोग्य इति "तदेतच्छ्रेयः पुत्रादि"ति श्रुतिं ब्रह्मविषयां वदतस्तवाऽपि सम्मत इति न द्वितीयहेतोरप्यसिद्धिः । अस्मन्मते यद्यपि संसारदशायामावृतो जीवानन्द एव ब्रह्मानन्दस्तथाऽपि तत्र साध्यनिश्चयाद्दृष्टान्तत्वमुचितम् । साध्यनिश्चययोर्दृष्टान्तत्वे तन्त्रम्; न पक्षान्यत्वमपि ॥

यद्वा ब्रह्मजीवानन्दयोर्बिंबप्रतिबिम्बभावेन व्यावहारिकभेदसत्वात्पक्षदृष्टान्तभावः । प्रतिबिम्बे च चैतन्यांश एवाऽनावृतः आनन्दांशस्त्वावृत इत्यभ्युपगमान्न साधनवैकल्यमपि ।

नन्वत्र साध्यं जीवानन्दाभेदरूपं जीवानन्दाद्भेदप्रतिषेधरूपं वा ? । नाऽऽद्यः, मया जीवब्रह्मानन्दयोरसाधारणरूपाभ्यां भेदस्येवाऽऽनन्दत्वादिसाधारणधर्मेणाऽभेदस्याऽपि स्वीकृतत्वेन सिद्धसाधनतापत्तेः। न द्वितीयः, त्वयाऽपि ब्रह्मजीवानन्दयोर्बिम्बप्रतिबिम्बयोर्व्यावहारिकभेदस्याऽङ्गीकृतत्वेन तत्प्रतिषेधे बाधापत्तेरिति चेत्, उच्यते—देवदत्तजीवानन्दगतासाधारणधर्मावच्छिन्नप्रतियोगिताकस्तदभेदस्साध्य इति नाऽभेदसाध्यपक्षे सिद्धसाधनम् । नाऽपि भेदप्रतिषेधपक्षे बाधः । त्वया ब्रह्म जीवाद्भिद्यते सर्वज्ञत्वादित्यनुमाने व्यावहारिकभेदेन सिद्धसाधनपरिहाराय(१) यद्विशेषणं निवेश्यते तद्विशिष्टभेदप्रतिषेधस्याऽत्र साध्यत्वाङ्गीकारात् । त्वया हि तत्र धर्मिसमसत्ताकत्वं धर्मिज्ञानबाध्यत्वं वा विशेषणं निवेश्यते तद्विशिष्टप्रतिषेधोऽत्र साध्यत इति न किञ्चिदनुपपन्नम् ॥

एवमग्रिमानुमानेष्वपि अभेदशब्दार्थो वर्णनीयः । ब्रह्म जीवाभिन्नं निर्दुःखत्वे सति सुखवत्त्वात्, निर्विकारत्वे सति ज्ञानवत्वात्, जीववत् । मतद्वयेऽपि ब्रह्मणि जीवे च स्वरूपसुखस्य स्वरूपज्ञानस्य च धर्म्यभिन्नत्वेऽपि विशेषबलादविद्यावशाद्वा धर्मत्वमप्यस्तीति न पक्षदृष्टान्तयोर्विशेष्यासिद्धिः । नाऽपि विशेषणासिद्धिः । मतद्वयेऽप्यन्तःकरणस्यैव दुःखादिसकलविकाराश्रयत्वात् । यद्यप्याध्यासिकदुःखादिविकाराश्रयत्वं जीवस्य प्रपञ्चाश्रयत्वं च तदुपादानस्य ब्रह्मणोऽस्ति तथाऽपि वस्तुतो निर्दुःखत्वं निर्विकारत्वं च विशेषणम् । तच्च धर्मिसमसत्ताकदुःखविकारशून्यत्वरूपं वैषयिकसुखाश्रये वृत्तिज्ञानाश्रये चाऽन्तःकरणे व्यभिचारवारणाय रूपादिषु तद्वारणाय हेतुद्वयेऽपि विशेष्यभागः । ब्रह्म, देवदत्तजीवाभिन्नं, तत्कर्मफलभोक्तृभिन्नत्वात्, देवदत्तजीववत् । त्वया ब्रह्मणो जीवगतपुण्यफलभोक्तृत्वस्य(२)गुहाधिकरणे व्यवस्थापितत्वेन त्वन्मते तस्य कर्मफलभोक्तृत्वेनाऽभिन्नत्वात्, अस्मन्मते तथाभूतेन जीवेन भिन्नत्वाच्च मतद्वयेऽपि हेतोर्नाऽसिद्धिः ।

न चाऽस्मन्मते हेतोस्साध्यावैशिष्ट्यम् । साध्ये जीवस्य जीवत्वेन हेतौ कर्मफलभोक्तृत्वेन निवेश इति विशेषणभेदेन तयोर्भेदात् । यद्यपि भोक्तृभिन्नत्वादित्येतावताऽपि न व्यभिचारस्तथाऽपि तत्कर्मफलभोक्तृत्वं तदभेदमन्तरेणाऽनुपपन्नमिति विपक्षबाधक-

१. वारणायेति ग. पु. । २. वे. सू. १. २. ११. अधि. ११. आत्मान्तरात्मेति हरिः एक एव द्विधा स्थितः । निविष्टो हृदये नित्यं रसं पिबति कर्मजम् । शुभं पिबत्यसौ नित्यं नाऽशुभं स हरिः पिबेत् । पूर्णानन्दमयस्याऽस्य चेष्टा न ज्ञायते क्वचित् । इति पाद्मे । इति. म. भा. १२. २. ८. ।

तर्कोत्थापकतया व्याप्तिग्रहानुकूलत्वान्न विशेषणवैयर्थ्यम् । हिरण्यगर्भादिजीवा ब्रह्माभिन्नाः तदीयदिव्यदेहेन्द्रियैर्भोक्तृभिन्नत्वात्, ब्रह्मवत् । (१)"ब्राह्मेण जैमिनिरुपन्यासादिभ्य" इत्यधिकरणे त्वया—

आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति ।
गच्छेच्च हरिपादेन मुक्तस्यैषा स्थितिर्भवेत् ॥

इत्यादिवचनं लिखित्वा सायुज्यमुक्तिगता हिरण्यगर्भादयो ब्रह्मणो देहं प्रविष्टास्तद्देहेन्द्रियैरेव भुञ्जत इति व्यवस्थापितत्वान्न त्वन्मते हेत्वसिद्धिः । नाऽप्यस्मन्मते तदसिद्धिः । अस्माभिरपि(२)पर्यङ्कविद्यादिप्रतिपादितया रीत्या ब्रह्मणो देहेन्द्रियाणां भोगस्य च स्वीकृतत्वेन तद्देहेन्द्रियैर्भोक्त्रा ब्रह्मणा हिरण्यगर्भादीनामभिन्नत्वस्याऽङ्गीकृतत्वात् पूर्ववद्विशेषणभेदेन हेतुसाध्ययोर्भेदः । जीवा ब्रह्माभिन्नाः, तदिन्द्रियैर्भोक्तृभिन्नत्वात्, आकाशादिप्रपञ्चस्रष्टृत्वात्, ब्रह्मवत् । यद्यपि मुक्तहिरण्यगर्भादीनामिव सर्वेषां जीवानां ब्रह्मदेहगतेन्द्रियैर्भोक्तृत्वं नाऽस्ति तथाप्यस्मदादिदेहगतान्यपीन्द्रियाणि ब्रह्मण एव करणानि । अस्मदादीनां तु स्वामिनः कुठारैर्भृत्यानामिव ब्रह्मकरणैरेव व्यवहार इति त्वया (३) "ज्योतिराद्यधिष्ठानं" इत्यधिकरणे व्यवस्थापितत्वात् त्वन्मते नाऽऽद्यहेतोरसिद्धिः । नाऽपि द्वितीयहेतोः । ध्यानमनोराज्यविषयप्रपञ्चेषु जीवानां स्रष्टृत्वस्य त्वयाऽङ्गीकृतत्वात् । अहमेव जगत्स्रष्टृ ब्रह्मेति जीवानां ध्यानादिसंभवाच्च । **वासिष्ठरामायणे**—ऐन्दवोपाख्याने—

अन्तस्थेनैव मनसा चिन्तयामासुरादृताः ।
ब्रह्माऽहं जगतां स्रष्टा कर्ता भोक्ता महेश्वरः ।
लोकपालपुरैस्सार्धं भुवनानि चतुर्दश ।
निर्मितानि मयैतानि तेषामन्तरहं स्थितः ॥

इतीन्दुनामकब्राह्मणपुत्राणां तथा ध्यानप्रतिपादनाच्च । अस्मन्मते तु पूर्ववद्धेतोरसिद्धिसाध्यावैशिष्ट्यनिरासः ।

१. सर्वदेहपरित्यागेन मुक्तास्सन्तः ब्रह्मणैव देहेन भोगान्भुञ्जत इति जैमिनिर्मन्यते । "स वा एष ब्रह्मनिष्ठ इदं शरीरं मर्त्यमतिसृज्य ब्रह्माभिसम्पद्य ब्रह्मणा पश्यति ब्रह्मणा शृणोति ब्रह्मणैवेदं सर्वं अनुभवती"ति माध्यन्दिनायनश्रुतावुपन्यासात् । "आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति । गच्छेच्च हरिपादाभ्यां मुक्तस्यैषा स्थितिर्भवेत्" इति स्मृतेः । "गच्छामि विष्णुपादाभ्यां विष्णुदृष्ट्या च दर्शनम् । इत्यादिपूर्वस्मरणान्मुक्तस्यैतद्भविष्यती"ति बृहत्तन्त्रोक्तयुक्तेश्च । ( म. भा. १५५. २. ७. ) २. कौषीतकिब्राह्मणोपनिषदि प्रथमाध्याये तृतीयपंचममन्त्रयोरुक्ता । ३. वे. सू. २. ४. १५. प्रतिपादितमिदं २४ श्लोकटीकायाम् ।

न च ब्रह्मजीवयोर्गुणोत्कर्षापकर्षसत्त्वाविरुद्धगुणाक्रान्त्या भेदश्शङ्कनीयः । ब्रह्मगतगुणोत्कर्षस्य तदभिन्नजीवसाधारण्येऽपि जीवे त्वदभिमतस्य ज्ञानबलानन्दोत्कर्षस्यैव संसारदशायामावृतत्वेनाऽप्रकाशसंभवस्य त्वन्मते ब्रह्मणोऽचिन्त्याद्भुतशक्तिमहिम्ना तर्कागोचरत्वमहिम्ना च विरुद्धगुणाक्रान्तेस्तद्भेदासाधकत्वस्य च प्रथमद्वितीयाधिकरणदूषणावसरे प्रपञ्चितत्वात् ।

**वस्तुतस्तु** त्वदभिमते ब्रह्मणि जीवगुणविरुद्धत्वेनाऽऽशङ्कनीयः कोऽपि गुणः श्रुतिसिद्धो न लक्ष्यते । त्वया त्वस्मिञ्छारीरकशास्त्रे विचारणीयं विशुद्धं ब्रह्मोपास्यप्रतिबिम्बरूपस्य बिम्बभूतं न तु स्वयमुपास्यमिति निरूपितम् । (१)"तथाऽन्यत्प्रतिषेधादि"त्यधिकरणे एवमङ्गीकुर्वतस्तव मते सृष्ट्यादिवाक्यमन्यच्च सकलं सगुणवाक्यजातमस्यप्रतिबिम्बपरमेव न तु विशुद्धब्रह्मपरम् । विशुद्धं तु ब्रह्म "यतो वाचो निवर्तन्ते" मुप… ऽनभ्युदितं" इत्यादिभिः कैश्चिदेवाऽस्मदभिमतनिर्गुणवाक्यैर्लक्षणया प्रतिपाद्य-"यद्वाच… येमित्युपपादितमस्माभिः पञ्चमाधिकरणदूषणे । ततश्च कुतो विशुद्धे ब्रह्मणि मभ्युपगन्तव्यविरुद्धगुणसिद्धिः ? येन तस्य जीवाद्भेदश्शङ्क्येत । न च तथा सत्या-जगत्कर्तृत्वा… वस्रष्टृत्वादित्यादिजीवब्रह्माभेदसाधकानुमानानां दृष्टान्ते साधनवैकल्यं काशादिप्रपञ्चसिद्धिर्वा स्यादित्याशङ्कनीयम् । परमर्यादया पराभ्युपगन्तव्यार्थविरुद्धमपि पक्षे हेत्वसिद्धिमनुसृत्य हेतूकरणसम्भवात् । त्वं हि उपासनार्थमेव सर्वासु श्रुतिषु पराभ्युपगममात्रं नातं विशुद्धं ब्रह्मोपास्यं च न भवतीति वदन्नपि विशुद्धस्य ब्रह्मणः जगत्स्रष्टृत्वाद्या… लभोक्तृत्वं देहेन्द्रियादिमत्त्वं अस्मदादिकरणस्वामित्वमित्यादिकमुपासनास्रष्टृत्वं कर्मफ… न तवाऽभिमतं गुणजातमङ्गीकरोपि । त्वदभ्युपगन्तव्यार्थाविरुद्धास्त्वनादिश्रुत्याम्नातत्वे… दयश्चत्वार एव हेतवः । त एव चाऽऽवृतो यस्त्वयोक्त इति मुक्तभोग्यमिति भावावृतः… स्थमिति विमलतन्विति च विशेषणैर्मूलश्लोके सङ्गृहीताः ।

अथाऽपि स्यात्–जीवानां सुखादिव्यवस्थया भिन्नानां कथमेकेन ब्रह्मणा सममभेदस्स्यादिति । इदमपि दत्तोत्तरम् । अर्जुनाखण्डलादीनां मुखादिवैचित्र्ये सत्यपि त्वदीयाभेदाभ्युपगमप्रदर्शनेन त्वन्मते ब्रह्मशक्त्यादिमहिम्ना विरुद्धगुणवत्त्वस्य भेदसाधकत्वव्यवस्थापनेन च । एवं च—

"यथा ह्ययं ज्योतिरात्माविवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् ।
उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥"

इत्यादिश्रुतिभिर्जीवब्रह्मणोर्जीवानां चाऽभेदसिद्धिरप्रत्यूहैवेति न भेदशङ्कावकाशः ।

---

१. वे. सू. ३. २. ३७. अधि. १८. पश्यन्ति परमं ब्रह्म चित्ते यत्प्रतिबिम्बितम् । ब्रह्मैव प्रतिबिम्बे यदतस्तेषां फलप्रदम् । तदुपासनं च भवति प्रतिमोपासनं यथा । ( म. भा. १३४. १. ४. )

न च भेदश्रुतिष्वपि सतीषु कुतोऽयमभेदश्रुतिपक्षपात इति शङ्कनीयम् । विरुद्धगुणवत्त्वादेरकिञ्चित्करत्वे स्थिते लाघवतर्केणाऽभेदश्रुतीनां प्राबल्यात् । न चैवमपि जीवाभिन्नमखण्डं त्वदभिमतं ब्रह्म श्रुतिभिर्न सिध्येत् । वाक्यानां पदार्थसंसर्गपरत्वस्य पदानां प्रवृत्तिनिमित्तसंसर्गपरस्य च व्युत्पत्तिसिद्धत्वेन जीवपरवाक्यानां ब्रह्मवाक्यानां च तत्तत्पदार्थसंसर्गपरतायास्तदन्तर्गतपदानां प्रवृत्तिनिमित्तसंसर्गत्वपरत्वस्य च वक्तव्यतया सखण्डविषयत्वावश्यंभावादिति वाच्यम्। त्वया जीवे ब्रह्मणि च निर्विकारे गुणक्रियादीनां (१)नित्यत्वेन धर्म्यभिन्नत्वेन समवायाश्रयाश्रयिभावादिसंसर्गरहितत्वेन चाऽभ्युपगततया त्वन्मतेऽपि श्रुतीनां तत्संसर्गविषयत्वप्रसक्त्यभावात् ।

न च तेषां संसर्गाभावेऽपि संसर्गव्यवहारनिर्वर्तकत्वेन मदभ्युपगतविशेष एव तत्र तत्र पदार्थविधया वाक्यार्थविधया वा भासमानस्सन्नखण्डत्वविरोधी स्यादिति वाच्यम् । विशेषस्याऽपि त्वया(२) धर्मभेदस्योक्तत्वात् तदङ्गीकारस्य वैयर्थ्यस्य चाऽस्माभिः प्रथमाधिकरणभङ्गे व्यवस्थापितत्वात् ।

एतेन महावाक्यार्थोऽपि जीवब्रह्माभेदविषयत्वेन सखण्ड इति निरस्तम् । अभेदस्याऽपि धर्मिभिन्नत्वस्याऽभावात् । धर्मिण एव संसर्गविधयाऽपि प्रतीतिश्चेत्तावता द्वैतापत्त्यभावेनाऽविरोधाच्च । तस्मात्त्वदीयतत्तदधिकरणमर्यादया पर्यालोचनयैवाऽशेषोपनिषन्महातात्पर्यवेद्यं सच्चिदानन्दैकरसमद्वितीयं ब्रह्म सिध्यत्त्वया निवारयितुं न शक्यत इति भावः ॥ ५५ ॥

एवं पञ्चाधिकरणीभङ्गार्थं परकीयतत्तदधिकरणस्थितिपर्यालोचनया लब्धां स्वाभिमताद्वितीयब्रह्मसिद्धिं चोरापहृतरत्नप्रत्याहरणसादृश्यप्रदर्शनेनोपसंहरति—

**मध्वादिभिर्मुषितमत्र सदद्वितीयं प्रत्याहृतं तदिदमागममौलिरत्नम् ।**
**आच्छाद्य गूहितमसारतरैस्तदर्थैस्तत्क्षुल्लकाधिकरणस्थलमर्दनेन ॥५६॥**

यथा खलु त्रासादिदोषरहिततया सदृशान्तररहितं सम्राजः किरीटरत्नमासवसेविभिः किरातैर्मुषित्वा क्षुद्रेषु स्वगृहेषु तृणदारुशलाका(३)दिभिरत्यन्तमसारैस्तदीयोपकरणैराच्छाद्य संगोपितं तदीयगृहभूम्याक्रमणेनाऽन्विष्य दृष्ट्वा(४) राजकीयैः प्रत्याह्रियते तथैवाऽद्वितीयं अतएव भयरहितं निगमशिरसामलङ्कारभूतं परं ब्रह्म मध्वजयतीर्थादिभिर्मुषित्वा युतयसहिष्णुभिः जीवब्रह्मणोः सविशेषाभिन्नगुणादिभिर्भेदकवदवभासमानैः स्वकल्पितार्थैराच्छाद्य गूहितं तदीयनिर्युक्तिकाधिकरणस्थितीनां मथनेन युक्तांशमन्विष्याऽस्माभिः प्रत्याहृतमित्यर्थः ॥ ५६ ॥

१. निमित्तत्वेन एव. पु. । २. त्वयेति. ग. पु. नास्ति. । ३. शकल. ग. पु. । ४. दृष्ट्वेति ग. पु. नास्ति ।

इत्थं मध्वमतदर्शनदूषणस्य तन्मतमर्यादयैवाऽद्वैतसिद्धेश्च मार्गप्रदर्शनमात्रं कृतम् । तच्च सद्भिरादरणीयम्, आप्तोक्तिमूलत्वादित्याह—

**आद्रियध्वमिदमध्वदर्शनं व्यध्वगं त्यजत मध्वदर्शनम् ।**
**शाङ्करं भजत शाश्वतं मतं साधवस्स इह साक्ष्युमाधवः ॥५७॥**

इदं मध्वदर्शनममार्गप्रवृत्तं त्यक्तव्यम् । शाङ्करमतन्तु शाश्वतं सेवनीयमित्यत्र स एव गौरीपतिस्साक्षी, यस्स्वयमेव शङ्कराचार्यरूपेणाऽवतीर्याऽद्वैतं व्यवस्थापितवानिति । "चतुर्भिस्सहितश्शिष्यैश्शङ्करो ऽवतरिष्यति" इत्याद्याप्तवचनेषु प्रसिद्ध इत्यर्थः ॥५७॥

एते श्लोकाः परविजयोन्मुखस्य परीक्षकस्य मुखवर्तितयोपकारकाः । पूर्वं देवविजयोद्युक्तस्येव सुपर्वनायकस्य नासीरवर्तितया मरुत इत्यत आह—

**असुरान्विजिगीषोः स्वयमद्वैतब्रह्मदिव्यरत्नहरान् ।**
**त्रिबुधेन्द्रस्य सखायः श्लोका मरुत इव सन्त्विमे मुख्याः ॥५८॥**

असुराः खलु(१) वैरोचिनीमुपनिषदमाश्रिता देहात्मवादिनः, प्रकृताः परेऽपि जीवस्यैव करचरणादिसकलकर्मज्ञानेन्द्रियसहितदेवरूपत्वं तेनैव देहेन स्वप्ने मुक्तौ च व्यवहारानपि वदन्तो देहात्मवादिन इति साम्यादसुरशब्देनाऽतिशयोक्त्या परे निर्दिष्टाः । मुख्याः मुखे वदने भवाः सेनामुखवर्तिनश्च ॥ ५८ ॥

---

१. **छान्दोग्ये** अष्टमाध्याये सप्तमखण्ड इन्द्रविरोचनाख्यायिका समाम्नाता । साऽत्राऽनुसन्धेया । सा यथा—"इन्द्रो ह वै देवानां अभिप्रवव्राज विरोचनोऽसुराणाम् । तौ हाऽसंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः । तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः । तौ ह प्रजापतिरुवाच किमिच्छन्तावबास्तमिति । तौ होचतुः य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः स सर्वांश्च लोकानवाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति भगवतो वचो वेदयन्ते तमिच्छन्तावबास्तमिति । तौ ह प्रजापतिरुवाच ।·········तौ हाऽन्वीक्ष्य प्रजापतिरुवाच-अनुपलभ्यात्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यन्ति ते पराभविष्यन्तीति । स शान्तहृदय एव विरोचनोऽसुरान्जगाम तेभ्यो हैतामुपनिषदं प्रोवाच ।···········असुराणां ह्येषा उपनिषत् प्रेतस्य शरीरं भिक्षया वसनेनाऽलङ्कारेणेति संस्कुर्वन्ति एतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ( छा. उ. ८. खं. ७. ८. ) **अयमत्र संग्रहः**—इन्द्रः विरोचनोऽसुरश्च ब्रह्मविद्याध्ययनार्थं प्रजापतिसमीपं जग्मतुः । तत्र द्वात्रिंशतं वर्षाणि तं शुश्रूषन्तावास्ताम् । ततः प्रजापतिस्तावपृच्छत् किमर्थमागतौ शुश्रूषणपरौ चेति । तावात्मस्वरूप-

अथ स्वनाम ग्रन्थनाम च कीर्तयन् प्रकरणसमाप्तिं दर्शयति—

विद्वद्गुरोर्विहितविश्वजिदध्वरस्य
श्रीसर्वतोमुखमहाव्रतयाजिसूनोः ।
श्रीरङ्गराजमखिनश्श्रितचन्द्रमौलि-
रप्पय्यदीक्षित इति प्रथितस्तनूजः ॥ ५९ ॥

सोऽयं मितपदमकरोन्महितार्थं मध्वशास्त्रमुखभङ्गम् ।
प्रीत्यै पुरामरातेः श्रीकामाक्षीसमेतस्य ॥ ६० ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजि-
श्रीरङ्गराजाध्वरीन्द्रसूनोः चतुरधिकशतप्रबन्धनिर्माणचणस्य **श्री-
मदप्पयदीक्षितेन्द्रस्य** कृतिषु **मध्वमतविध्वं-
सनसहितो मध्वतन्त्रमुखमर्दनाख्यो
ग्रन्थस्समाप्तः ॥**

---

जिज्ञासया भवन्निकटमागतौ इत्यूचतुः । ततः प्रजापतिः सर्वगतं परमात्मानमक्षिगत-त्वेन ताभ्यामुपदिदेश । तौ तु तद्यथावद्ज्ञातुमसमर्थौ नेत्रगतं छायारूपमेवाऽऽत्मत्वेन जगृहतुः । ततो जलपूर्णशरावमध्यगतं आभरणादिभिरलङ्कृतमेवमेवोपदिदेश । तत्र विरोचनो यथाश्रुतमेव जलमध्यगतं शरीरप्रतिबिम्बमेव परमात्मस्वरूपं जानन् सन्तुष्ट-मनाः प्रतिनिवृत्तस्तथा देहमेवाऽऽत्मत्वेनाऽसुरेभ्य उपदिदेश । सैषा देहात्मज्ञानविद्या आसुरी उपनिषदिति कथ्यते ॥ इति ॥

इति पूर्वोत्तरमीमांसापारावारपारीणैः वैदिकसार्वभौमैः महामहोपाध्याय-
पण्डितसार्वभौमादिविविधोपाधिविभूषितैः **श्रीचिन्नस्वामि-
शास्त्रिमहोदयैः** विरचितं **सन्दर्भविवरणाख्यं**
टिप्पणं समाप्तम् ॥

# मूलश्लोकसूची ।


| | पृष्ठम् | | पृष्ठम् |
|---|---|---|---|
| अग्रे वाच्यः | ४४ | ध्येयार्था एव | ८१ |
| अतः पञ्चा- | ३ | न ध्येयं | ८० |
| अद्वैते यद्य- | २१ | नाशङ्क्योत्प- | २२ |
| अपि च भगवा- | २५ | निर्मर्याद- | ५२ |
| अभेदे दृढे | १६ | पुंस्त्वादि- | १५ |
| असुरान्वि- | ९६ | पूर्णत्वं ते | ७१ |
| आत्मा ब्रह्मे- | ७ | प्राबल्यं | ४८ |
| आद्रियध्वं | ९६ | प्रामाण्यं | ८ |
| इति तव | १९ | मध्वादिभिः | ९५ |
| इत्थं जीव- | ५५ | मुख्यो भेदः | १७ |
| इत्थं त्वत्- | ८३ | यतो वेत्या- | ७७ |
| उक्थ्याग्नि- | ६१ | यदि त्वेनं | २० |
| एकं वाक्यं | १३ | यद्येवं रोच- | ५९ |
| एवं सुखित्व- | ४२ | यो यस्यो- | ६९ |
| ऐश्वर्यात् | ३२ | रोद्धा नोप- | ७४ |
| कथं निरस्या | ६४ | वक्तव्यं ते | २७ |
| कर्मब्रह्मो- | ६५ | विद्वद्गुरोः | ८७ |
| कर्त्रैकत्वं | ६९ | विशेषं | २६ |
| काचाऽत्रानु- | १५ | विष्णौ विश्वा- | ४३ |
| किञ्च स्थाणु- | ७३ | शब्दान्तरादि- | ५० |
| किञ्च श्रुत्यैक- | ६२ | शिवं विष्णुं | १ |
| किञ्चायं भेद- | ३० | श्रुत्यन्तानां | १२ |
| किञ्चेशो गुण- | २३ | श्लेषप्राणे | ६७ |
| तच्छास्त्रं चेत् | १४ | साक्षी जीवः | १० |
| तथाऽऽप्यानंद- | ३ | सिद्धेऽसिद्धे | १२ |
| तद्ब्रह्मेति | ७६ | सृष्ट्यादि- | ६७ |
| ,, | ६१ | सोयं मित- | ९७ |
| तस्मात्तुच्छं | २० | स्थूलप्रप- | ५८ |
| तस्माद्यत्ते | ९१ | स्फारात्तत्- | ७५ |
| दुःखित्वाद्येव | ४१ | स्पष्टुं प्रत्ये- | ६८ |

# व्याख्यायामुद्धृताना

## कारिकाणां सूची।


| | पृष्ठम् | | पृष्ठम् |
|---|---|---|---|
| अङ्गाङ्गित्वे | २६ | द्वैविध्येऽपि | ३९ |
| अङ्गीकृत- | ३८ | न जीवभेद- | ४४ |
| अर्थैकका- | ७८ | नरकेऽपि | ४१ |
| अधिकारा- | ५३ | न विशेषा- | १७ |
| अनन्योऽप्य- | ४७ | पन्थानं | ७७ |
| अन्तस्थेन- | ९३ | पश्यन्ति | ८१ |
| अप्पदीक्षित- | ५५ | पृथगेव | ३८ |
| अस्मत्पक्षे | ३१ | प्रतिबिंब- | ४९ |
| आदत्तेहरि- | ९३ | प्रथमो | ५ |
| आहूतस्य | ४२ | प्रमाण- | ८ |
| इत्यप्पदी- | ७३ | प्रमादात्म- | ३९ |
| ,, | ८० | ब्रह्मतर्क- | ८ |
| ,, | ९१ | भिन्नोचिन्त्यः | ४५ |
| उक्थ्यसं- | ६० | मध्वतन्त्र- | १ |
| उद्घाट्य- | १ | मध्वशास्त्र- | ८३ |
| उपक्रमा- | ११ | मिथ्यात्वं | ३८ |
| ऐश्वर्यात् | १८ | यथा क्रुद्धः | ७८ |
| कार्यकारण- | २१ | यथाह्ययं | ९४ |
| क्वचिद्ब्रह्मा | ७९ | यद्वाक्योक्तं | ६३ |
| गुणास्सर्वे | ८२ | लोकपाल- | ६३ |
| तत्तत्कल्पान्त- | ७९ | विजयस्त्वयि | ८९ |
| तथाप्यान- | १८ | सत्यत्वं | ४० |
| तदुपासनं | ८१ | सर्वत्राशेष | २१ |
| देवादीनामु- | ९० | | |

# व्याख्यागतानां श्रुत्यादिवाक्यानां सूची ।


| | | पृष्ठम् |
|---|---|---|
| अग्निहोत्रं | तै. सं. १. ५. ९. १. | ४१ |
| अङ्गुष्ठमात्रः | काठ. उ. ४. १२. | ८७ |
| अणोरणीयान् | काठ. उ. २. २०. | ५४ |
| अनइन् | मुण्ड. उ. ३. १. १. | ५० |
| अनादिमायया | गौ. का. १. १६. | १५ |
| अन्तरादित्ये | तै. आ. ३. ११. ६. | ८७ |
| अन्तः प्रविष्टं | तै. आ. ३. ११. ३. | ८७ |
| अन्तश्चन्द्रमसि | तै. आ. ३. ११. ४. | ८७ |
| अन्तस्समुद्रे | तै. आ. ३. ११. १. | ८७ |
| अन्नं ब्रह्मेति | तै. उ. ३. २. १. | ५६ |
| अन्योऽन्तर आत्मा | तै. उ. २. २. २. | ४८ |
| ,, | ,, ,, | ८५ |
| अप्यग्निष्टोमे | तै. सं. ६. ३. ११. ६. | ५९ |
| अरुण्यैक- | तै. सं. ६. १. ६. ७. | ३८ |
| अस्ति ब्रह्मेति | तै. उ. २. ६. १. | ४८ |
| अस्थूलमनणु | बृ. उ. ३. ८. ८. | २९ |
| अस्य लोकस्य | छा. उ. १. ८. ५. ६. | ८६ |
| अहं सर्वस्य | गीता. १०. ८. | ५७ |
| आत्मा वा | ऐत. उ. १. १. | २२ |
| ,, | ,, ,, | ३७ |
| आत्मान्त | छा. उ. ३. १४. ३. | २९ |
| आत्मेत्येवो- | बृह. उ. १. ४. ७. | ७० |
| आनन्दो | तै. उ. ३. ६. १. | ३० |
| ,, | ,, ,, | ५६ |

| | | पृष्ठम् |
|---|---|---|
| आनन्दं ब्रह्मणो | तैं. उ. २. ९. १. | ४७ |
| आनन्दाद्ध्येव | तैं. उ. ३. ६. १. | ५६ |
| आयुराशास्ते | तैं. ब्रा. ३. ५. १०. | ५३ |
| इन्द्रियेभ्यः | काठ. उ. ३. १०. | ६६ |
| ऊर्ध्वं प्राणं | ,, ,, ५. ३. | ८७ |
| एकधैव | बृ. उ. ४. ४. २०. | ६९ |
| एकमेवा- | छा. उ. ६. २. १. | ४८ |
| एको ह वै | महाना. उ. १. | ६७ |
| एतमन्नमयं | तैं. उ. ३. ९. | ४५ |
| ,, | ,, ,, | ४८ |
| एतन्नाना- | गीता. ९. १८. | ५६ |
| एतस्माज्जो- | प्रश्न. उ. ५. ५. | ८३ |
| एष आत्मा | छा. उ. ३. १४. ३. | २९ |
| एष हि | ,, ,, ४. १५. ४. | ९० |
| ऐन्द्रं दधि | तैं. सं. २. ५. ४. १. | ५० |
| किन्तु मलं | ऐत. ब्रा. अ. ३३. खं. १. ४. | ७९ |
| कुटुम्बे शुचौ | छा. उ. ८. १५. १. | ७७ |
| केन स्याद्येन | बृह. उ. | ६६ |
| को ह्येवान्यात् | तैं. उ. २ ७. १. | ४३ |
| गायत्री वा | छा. उ. ३. १२. १. | ८३ |
| चतुर्विधाः | गीता ७. १६. | ४२ |
| जुष्टं देवानां | तैं. सं. ३. १. ४. १. | २३ |
| तत्तेजोऽसृजत | छा. उ. ६. २. ३. | ५९ |
| तत्त्वमसि | छा. उ. ६. ८. ७. | ५७ |
| तदेतत्प्रेयः | बृह. उ. १. ४. ८. | १८ |
| तदेव ब्रह्म परमं | महाना. उ. १. २. | ८५ |

| | | पृष्ठम् |
|---|---|---|
| तदैक्षत बहु स्यां | छा. उ. ६. २. ३. | ६९ |
| तद्विजिज्ञासस्व | तै. उ. ३. १. | ७ |
| तद्विजिज्ञासस्व | तै. उ. ३. १. | ५५ |
| तद्विज्ञाय | तै. उ. ३. २. १. | ५६ |
| तद्वै त्वं प्राणः | तै. उ. ३. २. १ | ८७ |
| तपसाब्रह्म | तै. उ. ३. २. १. | ५६ |
| तयोरन्यः | मुण्ड. उ. ३. १. १. | ४७ |
| तेजसा सोम्य | छा. उ. ६. ८. ४. | ६७ |
| ते ये शतं | तै. उ. २. ८. | ८५ |
| त्रिवृत्पञ्चदशः | तै. ब्रा. १. ५. ११. २. | ३७ |
| त्रेधा तण्डुलान् | तै. सं. ५. ३. ४. ७. | ८ |
| द्यावाभूमी | श्वेता. उ. ३. ३. | ६९ |
| द्वा सुपर्णा | मुण्ड. उ. ३. १. १. | ५० |
| नापुत्रस्य | ऐत. ब्रा. ३३. २. ९. | ७९ |
| निरञ्जनः परमं | मुण्ड. उ. ३. १. ३. | ४५ |
| नेह नानास्ति | बृह. उ. ४. ४. १९. | २६ |
| ,, | ,, ,, | ४८ |
| ,, | ,, ,, | ६९ |
| परास्य शक्तिः | श्वेता. उ. ६. ८. | ६८ |
| पशुमालभेत | तै. सं. ६. १. ११. ६. | २२ |
| पुरुषस्य विद्म- | महाना. उ. १. ५. | ८५ |
| प्रजापतिश्चरति | महाना. उ. १. ३. | ५५ |
| ,, | ,, ,, | ८७ |
| प्रज्ञानेत्रो | आत्म. उ. १. | ४५ |
| बडित्था | ऋ. सं. २. २. ८. | ५ |
| ब्रह्मपुच्छं | तै. उ. २. ५. | ८५ |

| | | पृष्ठम् |
|---|---|---|
| ब्रह्म वा इदं | बृह. उ. १. ४. १० | ६७ |
| ब्रह्मविदाप्नोति | तै. उ. २. १. १. | ३३ |
| भूयश्चान्ते | श्वेताश्व. उ. १. १०. | १५ |
| य ईशे | तै. सं. ४. ३. ८. २. | ८५ |
| यतो वा इमानि | तै. उ. २. १. | २२ |
| ,, | ,, ,, | ५६ |
| यतो वाचो | तै. उ. २. ९. १. | ५० |
| ,, | ,, ,, | ८३ |
| ,, | ,, ,, | ९४ |
| यदा तमस्तन्न | श्वेता. उ. ३. १८. | ७३ |
| यदा वै सुखं | छा. उ. ७. २२. १. | २१ |
| यदेष आकाशः | तै. उ. २. ७. १. | ४३ |
| यदमुष्मिन् | तै. सं. ६. १. १. १. | ४३ |
| यद्वाचानभ्यु- | केन. उ. १. ५. | ८१ |
| ,, | ,, | ९४ |
| यन्मनसा न | केन. उ. १. ५. | ८० |
| ,, | ,, ,, | ९१ |
| ,, | ,, ,, | ९३ |
| यमन्तस्समुद्रे | तै. आ. ३. ११. ४. | ८५ |
| यस्मिन्पंच | बृह. उ. ४. ४. १७. | ५४ |
| यस्याऽण्डकोशं | तै. आ. ३. ११. ४. | ८७ |
| यस्सर्वज्ञः | मुण्ड. उ. १. १. ९. | ४५ |
| यावान्वा | छा. उ. ८. १. १. | २९ |
| येऽन्नं ब्रह्मो- | तै. उ. २. २. १. | ४७ |
| ये प्राणं | तै. उ. २. ३. १. | ४७ |
| यो मामेवं | गीता. १५. १८ | ३५ |

| | | पृष्ठम् |
|---|---|---|
| यो वै भूमा | छा. उ. ७. २३. १. ७१. | ४८ |
| वाग्वावता– | छा. उ. ७. २. १. | ७१ |
| वाङ्मनसि | छा. उ. ६. १५. २. | ३६ |
| विज्ञानं ब्रह्म | तै. उ. २. ५. १. | ४७ |
| वि मे कर्णा | ऋ. सं ४. ५. ११. ६. | ८६ |
| विविदिषन्ति | बृह. उ. ४. ४. २२ | ३ |
| श्येनेनाभिचरन् | षड्विं. ब्रा. | ७४ |
| श्रीश्च ते लक्ष्मीश्च | तै. आ. ३. १३. २ | ८७ |
| स एको ब्रह्मणः | तै. उ. ३. १०. ४. | ८५ |
| स एव परो वरीयान् | छ. उ. १. ९. २. | ८६ |
| स खल्वेवं वर्तयन् | छा. उ. ८. १५. १ | ७७ |
| सत्यं ज्ञानं | तै. उ. २. १. | ३० |
| सदेव सौम्य | छा. उ. ६. २. १. | २२ |
| ” | ” ” | ३४ |
| ” | ” ” | ७० |
| सप्तदश प्राजा– | तै. ब्रा. १. ३. ४. ३. | ५० |
| स यश्चायं | तै. उ. २. ८. | ४४ |
| सर्वं खल्विदं | छा. उ. ३. १४. १. | ५७ |
| ” | ” ” | ६१ |
| सर्वभूतगुणैः | | ४७ |
| सृष्टीरुप- | तै. सं. ५. ३. ४. ७. | ९ |
| सोऽस्मिन्नन्धे | | ७३ |
| सोमेन यजेत | तै. सं. ३. २. २. ३. | ५० |
| हिरण्यगर्भ- | तै. सं. ४. ३. ८. २. / महाना. उ. १३ | ८५ |


